सोत्तरा

# मध्यमाप्रश्नावली

[ द्वितीयखण्डम् ]

वृन्दावन-गुरुकुलमुख्याध्यापकेन
पण्डित शङ्करदेवपाठकेन
सम्पादिता ।



प्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

द्वितीयावृत्तिः ] [ १९३७

॥ श्रीः ॥

# प्रौढमनोरमा

महामहोपाध्याय–श्रीभट्टोजीदीक्षित–विरचिता ।



महामहोपाध्याय-श्रीहरिदीक्षितविरचित--लघुशब्दरत्नव्याख्यासमेता
महामहोपाध्यायश्रीभैरवमिश्रविरचित–शब्दरत्नव्याख्यया, लवपुरीय
प्राच्यमहाविद्यालयप्रधानाध्यापकवेदान्त–व्याकरणाचार्य–साहित्य–
मीमांसातीर्थमहामहोपाध्यायश्रीमाधवशास्त्रिभाण्डारीविरचित–
प्रभानामकटिप्पण्या, आयुर्वेद–व्याकरणाचार्य–
साहित्यतीर्थ–धर्मशास्त्रशास्त्रिपदवीकश्रीयुतपण्डितजग-
न्नाथशास्त्रिकृतयाऽव्ययीभावप्रकरणस्थ–शब्द-
रत्नप्रदीपकनामकटिप्पण्या
च समलङ्कृता ।

---

विद्वद्वृन्द !

आप लोगों को यह सूचित करते अत्यन्त हर्ष होता है कि उपरोक्त मनोरमा शब्दरत्न तथा भैरवी व्याख्याके साथ वेदान्त–व्याकरणाचार्य–साहित्य–मीमांसातीर्थ म० म० श्रीयुतपं०माधवशास्त्री भाण्डारी विरचित प्रभाटिप्पणी तथा अनेकशास्त्र के विद्वान् श्रीयुत पं० जगन्नाथशास्त्रीजी कृत अव्ययीभावप्रकरण पर शब्दरत्न प्रदीपक नामक टिप्पणी से अलङ्कृत होने से यह संस्करण इतना सुन्दर तथा परीक्षोपयोगि हुआ कि सीर्फ अल्प समय में ही प्रथम संस्करण हाथो हाथ विकगया, इस परिवर्धित द्वितीय संस्करण में व्याकरणशास्त्र के पर विद्वान् पं० सदाशिवशास्त्रिकृत "विसा" नामकी टिप्पणी भी नवी दी गई है। ग्रन्थ अत्यन्त उत्तम नवीन, अक्षरों से ग्लेज़ चिकने मोटे कागज पर छपा है । मूल्य भी अल्प केवल ४) है। विद्यार्थियों को कमीशन काट कर ३।) में दिया जायगा।

॥ श्रीः ॥

## मध्यमाद्वितीयखण्डप्रश्नावल्याः

# प्रयोगाणामकाराद्यनुक्रमणिका ।

इति मध्यमाद्वितीयखण्डप्रश्नावल्याः प्रयोगाणामकाराद्यनुक्रमणिका ।

* ओ३म् *

# सिद्धान्तकौमुद्याम्

## द्वितीयखण्डे प्रश्नाः

१९०१

१ स्मारयति देवदत्तेन इत्यत्र द्वितीया कथं नेत्युक्त्वा लक्षणेत्थंभूतेत्यादि-सूत्रार्थप्रदर्शनपूर्वकमुदाहरणानि प्रदर्शय ।

२ अलं श्रमेण, फलेभ्यो याति, मातुः स्मरणम्, रुदति प्राव्राजीत्, एषु तत्त-द्विभक्तिशास्त्राणि विशदं निरूपणीयानि ।

३ सहरि, सक्षगङ्गम्, सर्वश्वेतः, मध्याह्नः, केशाकेशि, आग्निवारुणम्, एतानि रूपाणि सशास्त्रं निरूपणीयानि ।

४ प्रतिलोमम्, मुकुटे कार्षापणम्, चक्रबन्धः, एकरूप्यम्, अन्यदर्थः एतेषां साधनं प्रदर्शनीयम् ।

५ किष्किन्धेति रूपस्य कानि कानि कार्याणि भवन्ति ।

६ कौञ्जायन्यः, औवेयः चोलः, कायम्, राजन्यकम् इति प्रयोगाणां साधुत्वं निरूप्य शर्कराशब्दात् कति रूपाणि जायन्ते इति लिख्यताम् ।

## उत्तराणि ।

१ प्र० ।

'गतिबुद्धि' त्यादि सूत्रे बुद्धिग्रहणेन ज्ञानसामान्यवाचिनां 'विदज्ञाने' ज्ञा अवबोधने इत्यादीनामेव ग्रहणं नतु ज्ञानविशेषवाचिनां स्मरत्यादीनाम् । अत्र च एतत्सूत्रस्थं दृशेश्चेति वार्तिकं ज्ञापकम् । अन्यथा ज्ञानविशेषवाचिनामपि तत्र ग्रहणे दृशेर्बुद्धिविशेषात्मकत्वादेव सिद्धत्वादेतद्वार्तिकं व्यर्थं स्यात् । अतः स्मरति प्रियां देवदत्तः तं यज्ञदत्तः प्रेरयति इत्यर्थे ऽण्यन्तकर्तुर्देवदत्तस्य कर्मत्वाभावाद् स्मारयति देवदत्तेनेत्यत्र द्वितीया न भवति ।

लक्षणादिष्वर्थेषु प्रत्यादयः कर्मप्रवचनीयसंज्ञाः स्युः । लक्षणे वृक्षं प्रति-परि-अनु वा विद्योतते विद्युत् । इत्थम्भूताख्याने, भक्तो विष्णुं प्रति-परि अनु वा भागे लक्ष्मीर्हरिं प्रति परि अनु वा वीप्सायाम्, वृक्षं वृक्षं प्रति पर अनुवा सिञ्चति ।

पूर्वोदाहरणेषु प्रत्यादीनां कर्मप्रवचनीयत्वात् वृक्ष-विष्णु-हरिशब्देभ्यो 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । अन्त्येतु कर्मप्रवचनीयत्वेनोपसर्गत्वाभावात्पत्वमपि न भवति ।

२ प्र० ।

अलं श्रमेण—इत्यत्र गम्यमानापि क्रिया कारकविभक्तेः प्रयोजिकेति वचनात् श्रमेण साध्यं नास्ति इति साधनक्रियापेक्षया श्रमस्य करणत्वात्कर्तृकरणयोस्तृतीयेति तृतीया । न केवलं श्रूयमाणैव क्रिया अपि तु प्रतीयमानाऽपि क्रियाकारकविभक्तीः प्रयोजयतीत्यर्थः ।

फलभ्यो याति—फलान्याहर्तुं यातीत्यर्थे फलाहरणक्रियार्थां यानक्रिया तद्वाचके उपपदे अध्याहर्तुमित्यध्याहारलभ्यतुमुन्नन्तार्थाहरणक्रियां प्रति फलानां कर्मत्वात् 'क्रियार्थोपपदस्यचकर्मणि स्थानिनः' इति चतुर्थी । क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था । क्रिया उपपदं यस्य स तस्य । तुमुनो विशेषणम् । स्थानिनोऽप्रयुज्यमानस्येत्यर्थः । क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात् । इति सूत्रार्थः ।

मातुः स्मरणम्—इत्यत्र वस्तुतः कर्मीभूताया मातुः शेषत्वेन विवक्षायां 'अधीगर्थदयेषां कर्मणि, इति षष्ठी । अस्मिन्सूत्रेऽधिगर्थपदेन स्मरणार्थको धातुर्गृह्यते । अधिपूर्वः इक् अधीक् तस्यार्थ इवार्थो यस्य स अधीगर्थ इति व्युत्पत्त्या ।

रुदति प्राव्राजीत्—इत्यत्र 'षष्ठीचानादरे' इति सूत्रेण सप्तमी । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः षष्ठीसप्तम्यौ स्तः इति सूत्रार्थः कदा सन्न्यस्तवानिति प्रश्ने उत्तरमिदम् ।

३ प्र० ।

सहरि—हरेः सादृश्यमित्यर्थे हरि ङस् सहेत्यलौकिकविग्रहवाक्ये सादृश्ये वर्तमानस्य सहेत्यव्ययस्य हरिणा सह 'अव्ययं विभक्ति' इत्यादिना समासे समासत्वात् कृत्तद्धितेति प्रातिपदिकत्वे 'सुपो धात्विति, ङसो लुकि 'प्रथमानिर्दिष्टमिति' सहेत्यस्योपसर्जनत्वे 'उपसर्जनं पूर्वमिति' तस्य पूर्वनिपाते 'अव्ययीभावे चाकाले'

इति सहस्य सादेशे निष्पन्नस्य सहरिशब्दस्य प्रातिपदिकत्वात् सौ अव्ययीभाव-समासस्य 'अव्ययीभावश्च' इत्यव्ययत्वेन 'अव्ययादाप्सुपः' इतिसोर्लुकि सहरि इति निष्पन्नम् ।

सप्तगङ्गम्—सप्तानां गङ्गानां समाहार इति लौकिकविग्रहे, सप्तन् आम् गङ्गा आम् इत्यलौकिकविग्रहे च 'तद्धितार्थोत्तरपदसमाहारे च' इति द्विगुसमासं बाधित्वा 'नदीभिश्च' इत्यनेनाव्ययीभावसमासे कृत्तद्धितेति प्रातिपदिकसंज्ञायां 'सुपोधातु' इति सुपोलुकिनलोपः प्रातिपदिकान्तस्येति नकारलोपे गोस्त्रियोरिति ह्रस्वत्वे सप्तगङ्गशब्दात्सौ तस्य 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यमि अमिपूर्वः इति पूर्वरूपे सप्तगङ्गम् इति सिद्ध्यति ।

सर्वश्वेतः—सर्वेषां श्वेततरः ( वकानां गुण इति शेषः, द्रव्यान्तरवृत्तिश्वे-तरूपापेक्षया सर्वेषां वकानां श्वेतगुणोऽयमधिकः इत्यर्थः ) इति विग्रहे प्राप्तस्य षष्ठीसमासस्य 'पूरण गुण इत्यादिना निषेधे प्राप्ते 'गुणात्तरेण तरलोपश्चेति वक्त-व्यम्' इति वार्तिकेन पुनः समासे तरप्रत्ययस्य लोपे च सर्वश्वेत इति रूपम् । अन्यत् सुब्लुगादिकं पूर्ववदूह्यम् ।

मध्याह्नः—अह्नो मध्यमिति विग्रहे अहन् ङस् मध्य सु इत्यलौकिकविग्रहेच 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे, इति मध्यशब्दस्याह्ना समासे सुब्लुकि मध्य-शब्दस्योपसर्जनत्वेन पूर्वनिपाते 'राजाहः सखिभ्यष्टच्' इति टचि 'अह्नोह्न एतेभ्यः' इत्यह्नादेशे समासात्पुनः सौ तस्य रुत्वविसर्गयोः मध्याह्नः इति निष्पद्यते । अत्र पूर्वापरेति समासविधायकसूत्रे मध्यशब्दस्यापाठात् कथं समास इति न शङ्क्यम् । 'संख्याविसाय' इति ज्ञापकात् सर्वोऽप्त्र ( पूर्वादिभिन्नोऽपि ) ह्ना समस्यते इति स्वीकारात् ।

केशाकेशि—केशेषु केशेषु गृहीत्वा ( स्थितयोः ) इदं युद्धं प्रवृत्तमिति विग्रहे 'तत्र तेनेदमिति सरूपे' इत्यनेन समासे 'सुपोधातु–' इति सुब्लुकि 'अन्ये-षामपि दृश्यते' इति पूर्वपदान्तस्य दीर्घे 'इच्कर्मव्यतिहारे' इति समासान्ते इचि यस्येति चेत्यकारलोपे 'केशाकेशि' इति निष्पद्यते ।

आग्निवारुणम्—अग्निश्च वरुणश्चेत्यग्नीवरुणौ; तौ देवतेऽस्येति विग्रहे 'सास्य देवतेत्यणि' अग्निवरुण औ, देवतेऽस्येति तद्धितालौकिकविग्रहवाक्ये प्राप्तमीत्वं बाधित्वा 'इद्वृद्धौ' इति अग्निशब्दस्य इकारस्य इकारे देवताद्वन्द्वे

चेत्युभयपदवृद्धौ यस्येतिचेत्यकारलोपे पुनः सुबुत्पत्तौ आग्निवारुणमिति निष्पन्नम् । अत्र यदि अलौकिकविग्रहवाक्य एव इदू न विधीयेत तर्हि इतेत्वा ( ईत ) दग्नी-वरुणशब्दात सास्यदेवतेत्यणि उभयपदवृद्धौ प्रवर्तमान इदादेशः पूर्वप्रवृत्तमीत्वं कथं बाधेत । युगपत्प्रवृत्तावेव बाध्यबाधकभावाभ्युपगमात् । अतोऽलौकिकवाक्य एव इत्वं विधीयते ।

४ प्र० ।

प्रतिलोमम्—प्रतिगतं लोम इति विग्रहे 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यचि 'नस्तद्धिते' इति टिलोपे प्रतिलोमशब्दात्पुनः सुबुत्पत्तौ तस्यामादेशे प्रतिलोममिति ।

मुकुटे कार्षापणम्—मुकुटे कार्षापणमिति विग्रहे सप्तमीसमासे 'सुपो धातु—इति प्राप्तस्य लुकः 'कारनाम्नि च प्राचां हलादौ' इत्यलुकि मुकुटे कार्षापणमिति ।

चक्रबन्धः—चक्रे बन्ध इति विग्रहे 'सिद्धशुष्कपक्वबन्धैश्च' इति सप्तम्यन्तस्य क्तान्तेन समासे 'तत्पुरुषे कृति' प्राप्तस्य सप्तम्या अलुकः 'नेन्सिद्धबध्नादिषु च' इति निषेधे 'सुपो धातु—इति सप्तम्या लुकि समासस्य प्रातिपदिकत्वात्पुनः सौ रुत्वविसर्गयोः चक्रबन्धः इति सिद्धम् ।

एकरूप्यम्—एकस्या आगतमिति विग्रहे 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' इति रूप्यप्रत्यये 'एकतद्धिते च' इत्येकाशब्दस्य ह्रस्वे एकरूप्यम् इति निष्पद्यते ।

अन्यदर्थः—अन्यस्यार्थं इति विग्रहे 'अर्थे विभाषा' इति सूत्रेण अन्यशब्दस्य पाक्षिके दुगागमे अन्यदर्थं इति रूपम् ।

प्र० ५

किष्किन्धा—किमपि वानरसैन्यं धत्ते इति विग्रहे 'आतोऽनुपसर्गे कः' इति कप्रत्यये टापि पारस्कर प्रभृतिषु निपातनात् किमो द्वित्वे मलोपे सुटि षत्वे च किष्किन्धेतिरूपम् । वस्तुतस्तु एवञ्जातीयकाः शब्दा रूढाः कथञ्चिद्व्युत्पाद्यन्ते ।

प्र० ६ ।

कौञ्जायन्यः—कुञ्जस्य गोत्रापत्यमिति विग्रहे 'गोत्रे कुञ्जादिभ्यः च्फञ्' इति च्फञि 'आयनेयी' इत्यादिना आयन्नादेशे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ कौञ्जायनशब्दात् 'व्रातच्फञोरस्त्रियाम्' इति ञ्य प्रत्यये ञकारस्येत्संज्ञालोपयोः 'यस्येति चेत्यकारलोपे कौञ्जायन्यः इति सिद्ध्यति ।

औवेयः—भ्रूर्नाम काचित् स्त्री तस्या अपत्यमिति विग्रहे 'भ्रुवो वुक् च' इति ढ प्रत्यये प्रकृतेर्वुगागमे ढस्य एयादेशे 'तद्धितेषु' इत्यादिवृद्धौ तद्धितान्तत्वेन प्रातिपदिकत्वे सौ औवेयः इति रूपम् ।

चोलः—चोलानां राजेति विग्रहे 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इत्यणि 'ते तद्राजाः' इत्यणस्तद्राजसंज्ञायाम् 'कम्बोजाल्लुक्' इति सूत्रस्थ 'कम्बोजादिभ्य इति वक्तव्यम्' इति वार्तिकेन अणो लुकि चोल इति रूपम् ।

कायम्—को ब्रह्मा देवता अस्येति विग्रहे कशब्दात् 'कस्येत्' इति सूत्रेण अण् प्रत्यये तत्सन्नियोगेन प्रकृतेरिकारान्तादेशे यस्येतिचेति लोपं परत्वात् बाधित्वा 'तद्धितेषु' इति वृद्धावायादेशे च कायमिति निष्पद्यते ।

राजन्यकम्—राज्ञां समूह इत्यर्थे 'गोत्रोक्षोष्ट्रो' इत्यादिना वुञि 'युवोरनाकौ' इति तस्याकादेशे 'आपत्यस्य च तद्धितेऽनाति' इति प्राप्तस्य यकारलोपस्य 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति निषेधे तद्धितान्तत्वेन प्रातिपदिकत्वे सौ तस्यामादेशे च 'राजन्यकम्' इति सिद्धम् ।

शर्कराशब्दात्तद्धितोत्पत्तौ षड् रूपाणि भवन्ति । तथाहि—शर्कराशब्दात् औत्सर्गिकेऽणि तस्य 'शर्कराया वा, इति लुपि युक्तवद्भावे च 'शर्करा' इत्येकं रूपम् । लुपः पाक्षिकत्वात्तदभावे 'शार्करम्' इति द्वितीयम् । 'ठक्छौ च' इति ठकि 'शार्करिकम्' इति तृतीयम् । तेनैव छप्रत्यये 'शर्करीयम्' इति चतुर्थम् । शर्कराशब्दस्य कुमुदादिषु पाठात् ठचि 'शर्करिकम्' इति पञ्चमम् । वाराहादिषु च पाठात् कक्प्रत्यये च 'शार्करकम्' इति षष्ठम् ।

१९०७

## प्रश्नपत्रम् ।

१ बलिं याचते वसुधाम्, प्रकृत्या चारु, हरये रोचते भक्तिः, विप्राय गां प्रतिश्रृणोति, नृणां नृषु वा द्विजः श्रेष्ठः, एषु कैः शास्त्रैर्विभक्तयः ।

२ अतिनिद्रम्, जरन्नैयायिकः, अतिराजी, दीर्घसक्थः, अग्निष्टोमः, अत्र समासादिकार्याणि तदार्थांश्च निरूपय ।

३ रात्रिमट, कीदृक्षः पितरौ, समीपम्, जरच्चित्रगुः, अत्र समासो विशेषकार्याणि च स्पष्टं निरूपणीयानि ।

४ एकोगोत्रे इति सूत्रप्रयोजनं कारिकाद्वयव्याख्यानपुरस्सरं निरूप्यताम् ।

८ जातायनः, आत्रेयः, पैतृष्वस्रीयः, एतानि विशेषकार्यनिरूपणपुरस्सरं प्रसाध्य शर्कराशब्दात्के चातुरर्थिका प्रत्ययाः कथं च तत्सिद्धिस्तत्स्पष्टं प्रदर्शय ।

## उत्तराणि ।

### प्र० १ ।

बलिं याचते वसुधामित्यत्र बलेरित्यस्य 'अकथितञ्च' इत्यनेन कर्मत्वे, वसुधामित्यस्य च 'कर्तुरीप्सिततमं कर्म, इति कर्मत्वे 'कर्मणि द्वितीया' इति द्वितीया विभक्तिः ।

प्रकृत्या चारुरित्यत्र 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकेन तृतीया । हरये रोचते भक्तिरित्यत्र भक्तिः स्वविषयां प्रीतिं हरौ जनयतीत्यर्थे भक्तिगतव्यापारप्रयोज्यप्रीत्याश्रयत्वाद्धरेः कर्मत्वे प्राप्ते 'रुच्यर्थानां प्रीयमाण' इति तस्य सम्प्रदानत्वे चतुर्थी ।

'विप्राय गां प्रतिश्रृणोति' अत्र प्रतिपूर्वस्य श्रुधातोः प्रेरणापूर्वकाभ्युपगमे वृत्तेः विप्रस्य प्रेरणाकर्तृत्वात् कर्तृतृतीयायां प्राप्तायां 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इत्यनेन तस्य सम्प्रदानत्वे चतुर्थी । मह्यं गां देहीति विप्रेण पृष्टः सन् तुभ्यं ददामीत्यभ्युपगच्छतीति वाक्यार्थः ।

'नृणां नृषु वा द्विजः श्रेष्ठः' अत्र 'यतश्च निर्धारणम्' इति निर्धारणे षष्ठीसप्तम्यौ ।

### प्र० २ ।

'अतिनिद्रम्, निद्रा सम्प्रति न युज्यते इति विग्रहे निद्रा सु अति ( असाम्प्रत्यर्थकोऽतिशब्दः ) इत्यलौकिकविग्रहे च 'अव्ययं विभक्ति' इत्यादिना समासे 'सुपोधातु' इति सोर्लुकि अतीत्यव्ययस्य समासविधायके शास्त्रे प्रथमान्तत्वात् 'प्रथमानिर्दिष्टम्' इत्युपसर्जनत्वे 'उपसर्जनं पूर्वम्, इति पूर्वनिपाते 'अव्ययीभावश्च' इति समासस्य नपुंसकत्वेन नपुंसकह्रस्वत्वे ततः सौ तस्य 'नाव्ययीभावादिति, अमादेशे पूर्वरूपेच अतिनिद्रमिति सिद्धम् ।

जरन्नैयायिकः—जरन्तश्च ते नैयायिकाश्चेति विग्रहे 'पूर्वकालैकसर्वजरत्' इति समासे सुपो लुकि अत्र समासविधायकसूत्रे जरच्छब्दस्य प्रथमानिर्दिष्टत्वात्तस्य पूर्वनिपाते समासस्य प्रातिपदिकत्वात्सौ रुत्वविसर्गयोः जरन्नैयायिकः इति निष्पन्नम् ।

अतिराजौ—अतिक्रान्ता राजानमिति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीया-

-यया' इति समासे 'राजाहः सखिभ्यष्टच्' इति समासान्ते टचि 'नस्तद्धिते' इति टिलोपे अति राजशब्दात् टचष्टित्वेन 'टिड्ढाणञिति' ङीपि 'यस्येति च' इत्यकारलोपे ङ्यन्तत्वात् सौ हल्ङ्यादिना तस्य लोपे च अतिराजीति सिद्ध्यति ।

दीर्घसक्थः—दीर्घे सक्थिनी यस्येति विग्रहे अनेकमन्यपदार्थे' इति समासे दीर्घसक्थिशब्दात् 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षचि यस्येति चेतीकारलोपे दीर्घसक्थः-इति सिध्यति ।

अग्निष्टोमः—अग्नेः स्तोम इति विग्रहे षष्ठी समासे 'सात्पदाद्योः' इति षत्वनिषेधे प्राप्ते 'अग्नेः स्तुत्स्तोमसोमाः' इति षत्वे अग्निष्टोमः-इति निष्पन्नम् । अग्निष्टोम इति स्तोत्रविशेषस्य संज्ञा ।

प्र० ३ ।

रात्रिमटः—रात्रिशब्दे सुप्युपपदे अट् धातोः मूलविभुजादित्वात्कप्रत्यये उपपदसमासे सुब्लुकि 'रात्रेः कृति विभाषा' इति पाक्षिके मुमागमे रात्रिमटः-इति निष्पन्नम् ।

कीदृक्षः—किमिव दृश्यन्ते इत्यर्थं 'वसः सुपि वाच्यः' इति दृशेः क्सप्रत्यये 'इदं किमोरीश्की'त्यत्र दृक्षेचेति वक्तव्यमिति वार्तिकेन किमः कीभावे कीदृक्षः-इति साधु ।

पितरौ—माता च पिता चेति द्वन्द्वसमासे 'पिता मात्रा' इति पितृशब्दस्यैकशेषे मातृशब्दस्य च लोपे पितृशब्दस्य 'यः शिष्यमाणोलुप्यमानार्थाभिधायी' इति नियमात् उभयार्थद्योतकतया द्विवचनाकारविभक्तौ पितरौ इति रूपम् ।

समीपम्—सङ्गता आपो यस्मिन्निति विग्रहे बहुव्रीहि समासे 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इति ईत्वम्, तच्चालोन्त्यस्येति अन्त्यस्थाने प्राप्तमपि 'आदेः परस्येति अकारस्य विधीयते ततः समीपशब्दात्सौ तस्यातोऽमित्यमादेशे समीपमिति सिद्धम् ।

जरच्चित्रगुः—जरती चासौ चित्रा चेति कर्मधारये 'पुंवत्कर्मधारय' इति जरतीशब्दस्य पुंवत्वाद् ङीपो निवृत्तिः ततः जरच्चित्रा गौर्यस्येति कर्मधारयपूर्वपदत्वे बहुव्रीहौ पूर्वपदस्य जरच्चित्राशब्दस्य 'स्त्रियाः पुंवत्' इति पुंवत्वात् टापो निवृत्तौ गोस्त्रियोरिति ह्रस्वत्वे च जरच्चित्रगुः—इति निष्पन्नम् ।

४ प्र० ।

नन्वेकोगोत्र इति सूत्रं व्यर्थं न च तत्रानेकप्रत्ययव्यावृत्त्यर्थमावश्यकं तदिति वाच्यम् । युगपदेकस्मिन्गोत्रेऽनेकप्रत्ययानामप्रसक्तेरित्याशङ्क्यसूत्रारम्भफलं दर्शयति–'गोत्रे स्वैकोनेत्यादि । स्वं गोत्रं तदपेक्षया एकोनसंख्यानां प्रत्ययानां तृतीये द्वयोः चतुर्थे त्रयाणां पञ्चमे चतुर्णां प्रत्ययानां परम्पराप्रसज्येत इति तदर्थः । तथाहि–उपगुशब्दात्तृतीये वाच्ये द्वयोरणिञोः प्रत्ययापत्तिः । उक्तशब्दादेव चतुर्थे वाच्ये त्रयाणमणिञ्फकां प्रत्ययानां प्रसक्तिः । तत एव पञ्चमे वाच्ये चतुर्णामणिञ्फगिञां प्रत्ययानां परम्परेति । न च यस्येति सूत्रेणाणोदलोपेनाविद्यमानत्वादणिञादीनाम्प्रत्ययानां परम्परेत्युक्तेः कथं संगतिरिति वाच्यम् । अणन्तादिञ उत्पत्तिः इञन्तात् फक् याभिप्रायेण प्रत्ययपरम्परेत्युक्तेः सङ्गतेः । यद्वा स्वं गोत्रं तदपेक्ष्या यूनसंख्येभ्यः प्रकृतिभूतेभ्यः प्रातिपदिकेभ्योऽनिष्टप्रत्ययोत्पत्तिरित्यर्थः । उपगोस्तृतीये वाच्ये एकस्मादौपगवादिञनिष्टः प्राप्नोति चतुर्थे वाच्ये द्वाभ्यां पञ्चमे त्रिभ्य इत्यादीति भावः । अत्र निष्टोत्पत्तिमात्रं नत्विष्टासिद्धिरित्यर्थः । अत्र पक्षे उपगुशब्दादणेष्टसिद्धावपि औपगवादिञ्निवृत्यर्थं नियमार्थं सूत्रम् । गोत्रे वाच्ये एक एव शब्दः प्रत्ययप्रकृतिर्नत्वनेकशब्दः इत्यर्थः । यद्वा एक शब्दः प्रथमवाची प्रथमः शब्दो गोत्रे प्रत्ययमुत्पादयतीत्यर्थः । प्रथमत्वञ्च सर्वमूलकत्वमिति स्पष्टं भाष्ये । अपत्यं पितुरेवेति । मुख्यपक्षमाह—ततः प्राचामपीत्यादि । पित्रपेक्षया प्राचां पितामहादीनामपीत्यर्थः । न पतन्त्यनेनेत्यपत्यमिति व्युत्पत्तेः । यस्य यन्निमित्तमपतनं तस्य तदपत्यमिति फलितम् । पितामहादीनामपतने पौत्रादेरपि हेतुत्वेन तेषामपत्यम्भवति । मतभेदेनेति । प्रथम पक्षे प्रत्ययमालाव्यावृत्तये । द्वितीये सद्यूनसंख्येभ्योऽनिष्टोत्पत्तिनिवृत्तये इत्यर्थः । सूत्रमेतत्तथोत्तरमिति स्पष्टमेव ।

५ प्र० ।

जातायनः—जातस्यापत्यमित्यर्थे पुंसि वर्तमानात् जातशब्दात् 'अश्वादिभ्यः फञ्' इति सूत्रस्थेन 'पुंसि जाते' इति गणसूत्रात् फञि फस्यायन्नादेशे जातायनः—इति ।

आत्रेयः—अत्रेरपत्यमित्यर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति प्राप्तमणं परत्वाद् बाधित्वा 'इतश्चानिञः' इति ढकि आदिवृद्धौ ढस्य एयादेशे आत्रेय इति निष्पद्यते ।

पैतृष्वस्त्रीयः—पितृष्वसुरपत्यमित्यर्थे 'पितृष्वसुश्छण्' इति छणि छस्य ईयादेशे आदिवृद्धौ सकाराद्दकारस्य यणि पैतृष्वस्त्रीयः-इति निष्पन्नम्।

शर्कराशब्दात्के प्रत्ययाः, पूर्वमुक्तं साधनम्। कथञ्च तत्सिद्धिरिति प्रश्नस्य न रूपसिद्धौ तात्पर्यमपितु प्रत्ययसिद्धौ तात्पर्यम्। कथं च ते प्रत्ययाः सिध्यन्तीति।

१९०८

## प्रश्नपत्रम्।

१ द्रोणो व्रीहिः, सुधां क्षीरनिधिं मथ्नाति, गङ्गायां घोषः, कृतपूर्वीकटम्, नेतव्या व्रजं गावः। एतेषां साधुत्वं प्रदर्शनीयम्।

२ प्रत्यर्थम्, भिक्षाद्वितीयम्, तक्षकस्य सर्पस्य, व्याघ्री, मद्रराज्ञी एते प्रयोगा व्युत्पत्तिपूर्वकं व्याख्यायन्ताम्।

३ पञ्चनावप्रियः, वीरपुरुषको ग्रामः, धर्मसभा, कल्याणीपञ्चमाः। इमे प्रयोगा विग्रहपुरस्सरं व्याख्येयाः।

४ अश्ववडवम्, अविकटोरणः, परमकारीषगन्धीपुत्रः, सपक्षः, गर्गभगिनी, जातेयः, इमानि रूपाणि सशास्त्राणि व्याख्येयानि।

५ आत्रेयः, मैत्रेयः, पार्थः, इति संसाध्य ब्राह्मोऽजातावित्यस्योदाहरणानि विविच्य वाच्यानि, अपूर्वात्सपूर्वात्कुलशब्दात् अपत्ये कानि २ रूपाणि कथञ्च।

## उत्तराणि।

ननु द्रोणादीनां परिमाणमर्थ इति तेभ्यः प्रातिपदिकार्थमात्र एव प्रथमासिद्धौ परिमाणग्रहणं व्यर्थमिति चेन्न—मूलोक्तार्थलाभाय तस्याऽऽवश्यकत्वात्, अत आह परिमाणमात्रे द्रोणोव्रीहिरिति। अयम्भावः—सूत्रे परिमाणग्रहणसत्वे तत्र द्रोणश-ब्दात्प्रथमाविधानेन परिमाणस्य प्रत्ययार्थत्वात् तत्र प्रकृत्यर्थस्य द्रोणस्याभेदेना-र्थादितरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसम्बन्धेनान्वयः। प्रत्ययार्थस्य परि-माणस्य परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वयः। एवञ्च द्रोणाभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति फलति। परिमाणग्रहणाभावे प्रातिपदिकार्थे प्रथमावि-धानात्प्रातिपदिकार्थस्यप्रत्ययार्थत्वात्तत्र द्रोणस्याभेदान्वयः। प्रत्ययार्थस्य च तस्योक्तसम्बन्धेन व्रीहावन्वयस्तथा च द्रोणाभिन्नो व्रीहिरिति बोधः स्यात्। पर-

न्त्वेतद्नामार्थद्वयोरभेदादतिरिक्तः संबन्धोऽव्युत्पन्न इति व्युत्पत्तिविरोधात् । तस्मान्मूलोक्तार्थपरिमाणग्रहणमावश्यकमिति भावः ।

सुधां क्षीरनिधिमिति—क्षीरोदधेः सकाशात् सुधां मन्थानदण्डभ्रमणेनोद्भावयतीत्यर्थः । व्यापारप्रयोज्योद्भवाश्रयत्वात्सुधाप्रधानकर्म । क्षीरोदधिस्तु उद्भवं प्रत्यपादानम् । तस्यापादानत्वमुपेक्ष्य सुधाद्वारा उद्भवाश्रयत्वात् 'अकथितञ्च' इति कर्मविवक्षायां द्वितीया ।

गङ्गायां घोषः—करणमिति महासंज्ञया 'क्रियतेऽनेन' इत्यन्वर्थबोधनेन क्रियासिद्धिसाधकस्यैव करणसंज्ञासिद्धौ साधकपदमेव साधकतमार्थं भविष्यतीति किं तमब्ग्रहणेनेति प्रष्टुराशयः । उक्तरीत्या व्यर्थं सत्तमब्ग्रहणं 'अस्मिन्कारकाधिकारे प्रकर्षविवक्षानाश्रीयत, इति ज्ञापयति । तेन च गङ्गायां घोष इत्यत्र सप्तमी सिध्यति । अन्यथा तुल्यन्यायेन 'अधिकरणम्' इत्यपि महासंज्ञया 'अधिक्रियतेऽस्मिन्' इत्यन्वर्थत्वेनैवाधारलाभे आधारपदमाधारतमार्थं भविष्यति । तथा च सर्वावयवव्याप्त्याय आधारस्तस्यैवाधिकरणसंज्ञायां तिलेषु तैलम्, दधनिसर्पिः, सर्वस्मिन्नात्माऽस्ति, इत्यादावेवाधिकरणसञ्ज्ञा स्यान्नतु 'गङ्गायां घोषः' इत्यादावपि । अतस्तत्रापि सिध्यर्थं तमब्ग्रहणम् ।

कृतपूर्वीकटम्—कृतपूर्वशब्दात् 'पूर्वादिनिः' 'सपूर्वाच्च' इति इनि प्रत्ययस्तद्धितः । तत्र करोति क्रियापेक्षया कटस्य कर्मत्वादनेन षष्ठीप्राप्तौ 'कर्तृकर्मणोः कृति' इति सूत्रे कृद्ग्रहणान्न भवति । ननु कृतः कटः पूर्वमनेनेति विग्रहे कृतशब्दस्य पूर्वशब्देन समासो न सम्भवति । कृतशब्दस्य कटशब्दापेक्षत्वेन सामर्थ्यविरहात् । अत एव तद्धितः इनि प्रत्ययोऽपि दुर्लभः । किञ्च कृत इति क्तप्रत्ययेन कटस्य कर्मणोऽभिहितत्वेन ततः षष्ठ्याः प्राप्तिरेव नास्तीति किं तन्निवृत्त्यर्थेन कृद्ग्रहणेन ? क्त प्रत्ययेन कृताऽभिहितत्वादेव कटात् द्वितीयापि दुर्लभेति चेत्, कृत अम् पूर्व अम् इत्यलौकिकविग्रहवाक्ये कटस्यासन्निहिततया कर्मत्वेनान्वयासम्भवेनकृञ्धातोस्तदानीमकर्मकतया कर्मणि क्तप्रत्ययस्यासम्भवत्वे सति 'नपुंसके भावे क्तः' इति भावे क्तप्रत्यये कृते सति कृतशब्दस्य कटशब्दसापेक्षत्वाभावात् समासतद्धितौ निर्बाधौ । ततश्च कृतपूर्वीति तद्धितान्तस्य पूर्वं कृतवानित्यर्थः पर्यवस्यति । किं कृतवानति कर्मजिज्ञासायां कटमित्यन्वेति । तच्च कर्मत्वं न क्तप्रत्ययेनाभिहितम्, तस्य भावे विधानात् । नापीनि प्रत्ययेन तस्य कर्तरिविधानात् ।

तथाच असति कृद्ग्रहणे षष्ठी स्यात् तन्निवृत्त्यर्थं कृद्ग्रहणमिति सर्वमवदातम् ।

नेतव्येति—ननु नेतव्या व्रजं गावः कृष्णेनेत्यत्र कृत्यसंज्ञकतव्यप्रत्ययोगात् 'उभयप्राप्तौ' इति बाधित्वा कृष्णात् षष्ठीविकल्पः स्यात्, व्रजात्तु 'कर्तृकर्मणोः कृति' इति नित्यं षष्ठी स्यात् । अत्रोच्यते—कृत्यानां कर्तरि वेति सूत्रे 'कृत्यानाम्' इति योगो विभज्यते कृत्ययोगे कर्तृकर्मणोरुभयोः प्रसक्तापष्ठीनेति तदर्थः । तेन कृष्णेनेत्यत्र न षष्ठी विकल्पो नापि व्रजान्नित्यं षष्ठीति ।

२ प्र० ।

प्रत्यर्थम्—अर्थमर्थं प्रतीति लौकिकविग्रहवाक्यम् । अत्र वीप्सायां द्विर्वचनम् 'लक्षणेत्थं भूताख्यान' इति वीप्सायां द्योत्यायां प्रतेः कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । समासे तु द्विर्वचनं न । वीप्सायाः समासेन द्योतितत्वात्, प्रतिनोक्तत्वाद्वा । अर्थ अम् प्रतीत्यलौकिकविग्रहे च 'अव्ययं विभक्ति' इत्यादिना यथार्थेऽव्ययीभावसमासे समासत्वात्प्रातिपदिकत्वे 'सुपोधातु' इति अमो लुकि प्रतेरुपसर्जनसंज्ञायां पूर्वनिपाते प्रत्यर्थशब्दात् पुनः सौ तस्य 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यम्भावे पूर्वरूपत्वे च प्रत्यर्थम्–इति निष्पन्नम् ।

भिक्षाद्वितीयम्—द्वितीयतृतीयेत्यादिसूत्रे विभाषाधिकारेणैव विकल्पे सिद्धेऽन्यतरस्याङ्ग्रहणस्य वैयर्थ्यापातात् पक्षे षष्ठी समासोऽभ्युपगम्यते तेन द्वितीयं भिक्षाया इति विग्रहे एकदेशिसमासाभावे 'षष्ठी' इत्यनेन समासे समासस्य प्रातिपदिकसंज्ञायां सुपो लुकि षष्ठ्यन्तस्य भिक्षाया इत्यस्य 'प्रथमानिर्दिष्टम्' इत्युपसर्जनत्वेन पूर्वनिपाते भिक्षाद्वितीयशब्दो निष्पद्यते । नचात्र 'पूरणगुण' इति षष्ठी समासनिषेधात् कथमिह समास इति वाच्यम् । अन्यतरस्याङ्ग्रहणसामर्थ्यान्निषेधस्य बाधात् ।

व्याघ्री—उपपदमतिङिति सूत्रस्थमतिङ्परं पृथक्कृत्यकुगतिप्रादयः इत्यत्रापि संबध्यते तत्र गतिग्रहणञ्च पृथक् क्रियते तेन कुप्रादयः अतिङन्तेन सह समस्यन्ते सुबन्तत्वं नापेक्षन्ते इति भावः । अतः 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरितीयं परिभाषा सिध्यति परिभाषायाश्चास्या व्याघ्रीति' फलम् । तथाहि—व्याङ्पूर्वात् घ्राधातोः 'आतश्चोपसर्गे' इति कप्रत्यये 'आतो लोप इटि च' इत्याल्लोपे आङो घ्रशब्देन गति समासे आघ्रशब्देन च वेः समासे व्याघ्रशब्दो निष्पद्यते । तत्र यदि 'उपपदमतिङ्' इति समासविधाने घ्रशब्दस्यो

सुबन्तत्वमपेक्ष्येत, तर्हि स्त्रीप्रत्यये उत्पन्ने सुबुत्पत्तिःस्यात् सुबुत्पत्तये लिङ्गसंख्या-कारकाणां क्रमेणापेक्ष्यत्वात् ततश्च लिङ्गयोगे सति अदन्तत्वात् टाप् स्यात् नतु जातिलक्षणङीप् घ्रशब्दमात्रस्य जातिवाचित्वाभावात्। ततः घ्राशब्देन सुबन्तेन समासे सति व्याघ्राशब्दस्य अदन्तत्वाभावात् जातिलक्षणोङीप् न स्यात्। सुबुत्पत्तेः प्रागेव कृदन्तेनैव घ्रशब्देन समासे तु लिङ्गयोगे व्याघ्रशब्दस्य जातिवा-चित्वाज्जातिलक्षणे ङीपि व्याघ्रीति इष्टं रूपं सिध्यति।

मद्रराज्ञी—मद्राणां राज्ञीति विग्रहे मद्रशब्दस्य राज्ञीशब्देन सह षष्टीसमासे लिङ्गविशिष्टपरिभाषया 'राजाहःसखिभ्यष्टच्' इति प्राप्तस्य समासान्त टचः एत-स्या परिभाषाया अनित्यत्वात् ( समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषा नेति ङ्याप्प्रातिपदिकादित्यत्र भाष्योक्तेः ) अप्रवृत्तौ मद्रराज्ञीति निर्बाधम्।

३ प्र०।

पञ्चनावप्रियः—पञ्च नावः प्रिया यस्येति विग्रहे प्रियशब्दे उत्तरपदे परे पूर्वयोः 'तद्धितार्थोत्तरपदसमाहारे च' इति तत्पुरुषे समासे 'नावोः द्विगोः' इति टचि आवादेशे च पञ्चनावप्रिय इति निष्पन्नम्।

वीरपुरुषकोग्राम इति—वीराः पुरुषा यस्मिन्निति विग्रहे वीर जस् पुरुष जस् इत्यलौकिक विग्रहे च 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे, समा-सस्य प्रातिपदिकत्वात् 'सुपोधातु' इति सुपोलुकि 'शेषाद्विभाषा' इति कपि वीरपुरुषक इति सिद्धम्।

धर्मसभा—धर्मशालेत्यर्थे धर्मसभाशब्दः। तत्र सभाशब्दस्य शालार्थक-त्वात् 'अशाला च' इति विहितं क्लीबत्वं न भवति।

कल्याणीपञ्चमाः—कल्याणी पञ्चमी यासां रात्रीणां ताः इति विग्रहे बहुव्रीहिसमासे कृते 'स्त्रियाः पुंवत्' इति प्राप्तस्य कल्याणीशब्दस्य पुंवद्भावस्य पूरणार्थप्रत्ययान्ते पञ्चमीशब्दे परे 'अपूरणी प्रियादिषु' इत्यंशेननिषेधे 'अप्पूरणी-प्रमाण्योः' इति समासान्तेऽप् प्रत्यये टापि यस्येतिचेतीकारलोपेच कल्याणी पञ्चमा इति निष्पद्यते।

४ प्र०।

अश्ववडवम्—अश्वाश्च वडवाश्चेति द्वन्द्वसमासे 'विभाषा वृक्षमृग' इत्या-दिना नपुंसकनिपातनात् 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे अश्ववडवम् इति रूपम्।

नचाश्ववडवग्रहणं व्यर्थम्, सेनाङ्गत्वेऽपि पशुद्वन्द्वत्वादेवएकवद्भावविकल्पसिद्धेरिति वाच्यम् । तद्ग्रहणस्य नपुंसकत्वविकल्पार्थत्वात् ननु समाहारस्य एकत्वादेव एकवत्त्वविकल्पसिद्धेः इदमेकवत्त्वप्रकरण समाहार एव द्वन्द्व इति नियमार्थमित्युक्तम् । तथा च पशुद्वन्द्वात् एकवत्वविकल्पे सति समाहारे वा इतरेतरयोगे वा द्वन्द्व इत्यनियमः पर्यवस्यति । एवञ्च समाहारद्वन्द्वपक्षे 'स नपुंसकम्' इति नपुंसकत्वमितरेतरयोगे तु नेति नपुंसकत्वविकल्पस्य सिद्धत्वात् अश्ववडवग्रहणं व्यर्थमेवेति । अत्रोच्यते—अत्र नपुंसकत्वसिद्ध्यभावे समाहारद्वन्द्वपक्षेऽपि 'स नपुंसकम्' इति नपुंसकत्वं बाधित्वा परत्वात् 'पूर्ववदश्ववडवौ' इति पुंस्त्वं स्यात् नपुंसकविधौ तु तत्सामर्थ्यात् पुंस्त्वं बाधित्वा नपुंसकत्वं भवत्येव ।

अविकटोरणः—अवीनां संघातः अविकटम् तस्मिन् उरणः ( मेषः ) इति विग्रहे सप्तमी तत्पुरुषे उरणशब्दस्य हलादित्वाभावात् 'कारनाम्नि च प्राचाम्' इति प्राप्तस्य सप्तम्या अलुकोऽप्रवृत्तेः 'सुपोधातु' इति सप्तम्या लुकि अविकटोरण इति प्रयोगः साधुः ।

परमकारीषगन्धीपुत्रः—ननु करीषस्य गन्ध इव गन्धोयस्येति विग्रहे सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपः' इति समासे पूर्वखण्डे उत्तरस्य गन्धशब्दस्य लोपे च 'उपमानाच्च' इतीत्वे करीषगन्धः तस्यापत्यं स्त्री इत्यर्थे तस्यापत्यमित्यणि 'अणिञोरनार्षयोः' इति तस्य ष्यङादेशे यस्येतिचेतीकारलोपे आदिवृद्धौ 'यङश्चाप्' इति चापि कारीषगन्ध्या, परमा च सा कारीषगन्ध्या च परमकारीषगन्ध्या, तस्या पुत्र इति षष्ठीसमासे सुब्लुकि परमकारीषगन्ध्या पुत्र इति स्थिते 'ष्यङः सम्प्रसारणम्' इति ष्यङः सम्प्रसारणेन इकारे 'सम्प्रसारणस्य' इति दीर्घे च परमकारीषगन्धीपुत्र इति रूपम् । अत्र ष्यङः कारीषगन्धीशब्दादेव विहितत्वेन परमकारीषगन्ध्याशब्दस्य सपूर्वपदस्य ष्यङन्तत्वाभावात् प्रत्ययग्रहणे तदादिनियमाच्च सम्प्रसारणमत्र दुर्लभमिति तु नशङ्क्यम् 'स्त्रीप्रत्यये चानुपसर्जनेन' इति तदादिनियमप्रतिषेधात् ।

सपक्षः—समानः पक्षो यस्येति बहुव्रीहौ सुपोलुकि 'समानस्य छन्दस्य' इति सूत्रे समानस्येति योगविभागात्समानस्य सभावे सपक्ष इति । यद्वा समानः पक्षोऽस्येत्यस्वपदविग्रहे सदृशवाचकसदृशब्देन च समासे तस्य च 'वोपसर्जनस्य' इति सभावे सपक्ष इति ।

गर्गभगिनी—ननु गर्गाणां भगिनी गर्गभगिनीत्यत्र ङीप्प्रत्ययप्रकृतिभूत-भगिन्शब्दात्मकप्रातिपदिकान्तत्वात् नकारस्य 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति णत्वविकल्पः कथन्नेति प्रष्टुराशयः। उत्तरयितुस्त्वयमाशयः—प्रकृतसूत्रे पूर्व-पदेन उत्तरपदमाक्षिप्यते तच्च प्रातिपदिकस्यन विशेषणम्, ननु तदन्तस्य नापि नुम्विभक्त्योः। प्रकृतोदाहरणे च भगिनीशब्द उत्तरपदं ननु तत्प्रातिपदिकं प्रत्य-यान्तत्वात् लिङ्गविशिष्टपरिभाषया प्रातिपदिकग्रहणेन भगिनीशब्दस्य ग्रहणेऽपि तदन्तमीकार एव ननु नकारः अतो नात्र पाक्षिकं णत्वमिति। अत्र च नुम्ग्रह-णमेव ज्ञापकम्।

जातेयः—जाताया अपत्यमित्यर्थे 'पुंसि जाते' इति वार्तिकेन पुंलिङ्गादेव जातशब्दात् फञ् विधानात् अत्र जाताशब्दस्य स्त्रीत्वात् तदभावे 'स्त्रीभ्यो ढक्' इति भावे ढस्य एयादेशे च जातेयः-इति रूपम्।

५ प्र०।

मैत्रेयः—मित्राया अपत्यमित्यर्थे 'द्व्यचः' इति ढकि ढस्य एयादेशे आदि-वृद्धौ यस्येति चाकारलोपे मैत्रेयः-इति निष्पद्यते।

पार्थः—पृथाया अयमित्यर्थे 'तस्येदम्' इत्यणि आदिवृद्धौ पार्थः। केचित्तु शिवादित्वादपत्यएवार्थेऽणित्याहुः।

ब्राह्मोऽजातौ—अयं योगो विभज्यते। ब्राह्म इत्येको योगः। अत्र च 'इनण्यनपत्ये' इत्यतः अन्यपत्येऽणीत्यनुवर्तते। तेन ब्रह्म देवता अस्येति विग्रहे ब्रह्मन् शब्दात् 'सास्य देवता' इत्यणि टिलोपे च अनपत्येऽपि ब्राह्मं हविरित्येकमुदा-हरणम्। ततोजाताविति द्वितीयो योगः। अपत्ये जातवणि ब्रह्मष्टिलोपो न स्यात् इति तदर्थः। तेन ब्रह्मणोऽपत्यमित्यर्थे ब्रह्मन् शब्दात् अपत्यार्थेऽणि टिलोपाभावे ब्राह्मण इति द्वितीयमुदाहरणम्।

अपूर्वपदात्कुलशब्दात् 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति यड्ढकञोः सतोः अन्यतरस्यां ग्रहणात् पक्षे खे च सति कुल्यः, कौलेयकः, कुलीन इति त्रीणि रूपाणि। सपूर्वपदात्तु तस्मात् 'कुलात्खः' इति केवलः ख एव तेन आढ्यकुलीन इत्येकमेव रूपम्।

## १९११

## प्रश्नपत्रम्।

१ द्रोणो व्रीहिः, बहवः इत्युभयत्र प्रातिपदिकार्थमात्रे प्रथमया कुतो नेष्ट-

सिद्धिः ? केन मासमासयति देवदत्तमित्यत्र कर्मत्वमिति च युक्तियुक्तमुच्यताम् ।

२ क्रोशं गिरिः, अक्ष्णा काणः, यागाय याति, परिहरेः संसारः, कृष्णस्य हितं भूयात्, चर्मणि द्वीपिनं हन्ति, एषु किमर्थबोधकैः कैर्वचनैर्द्वितीयादयो विभक्तयः— इति सम्यगभिधीयताम् ।

३ आयतीगवम्, परोक्षम्, द्व्यहजातः, नक्तः, इभ्ययुवतिः, एतेषां सिद्धिं प्रदर्श्य उपपदमतिङित्यत्रातिङ्ग्रहणस्य अमैवाव्ययेनेत्येतदर्थघटकैवकारस्य च फलं साधूपपादनीयम् ।

४ द्व्यह्ना, महाबाहुः, षोडन्, चित्राजरद्गुः, सापत्नः, सापत्यः, श्वण्डादण्डि, अग्नीषोमौ, निःश्रेयसम्, एतेषां साधुत्वमुपपाद्यताम् ।

५ दूष्यः, बृहस्पतिः, अङ्गिरसः, यौधेयी, मालुञ्चकम्, गार्भिणम्, वात्या, प्रागद्यः, श्यैनं पाता, मृगया, पाणिनीया, एषां सिद्धिः प्रदर्शनीया ।

६ वामदेवाड्ड्यड्ड्याविति सूत्रे डित्करणस्य, बिल्वकादिभ्यश्छस्य लुगिति-सूत्रस्थछग्रहणस्य प्रयोजनं निरूप्यताम् ।

## उत्तराणि ।

### १ प्र० ।

ननु पञ्चकं प्रातिपदिकार्थ इति नये बहुशब्दस्य संख्याया अपि प्रातिपदिकार्थत्वात् तत्र बहुशब्दात्प्रथमासिद्धौ सूत्रे वचनग्रहणं व्यर्थमितिचेन्न उन्मार्थानामप्रयोग इति न्यायविरोधेन बहुशब्दात्प्रातिपदिकार्थे प्रथमाऽप्राप्त्या तदर्थमिहवचनग्रहणस्यावश्यकत्वेन सार्थक्यात् । बह्वर्थेविभक्तिर्विधेया सचार्थः प्रकृत्यैव प्रतिपादित इति तस्याभिधानाय पुनर्विभक्तिर्नावश्यिका यथा घटोऽस्ति कलश इति न भवति, इत्यभिप्रायकोक्तन्यायविरोधो दुर्वार इति वचनग्रहणमावश्यकम् । नच वचनग्रहणसत्वेप्युक्तन्यायविरोधो दुर्वार इति वाच्यम् । सामर्थ्यादुक्तन्यायबाधेन विरोधपरिहाराद् । नहि तद्ग्रहणमन्तरेष्टसिद्धिरितिभावः ।

मासमासयति देवदत्तम— ननु मासमास्ते देवदत्तः, तं प्रेरयति मासमासयति देवदत्तं यज्ञदत्तः इत्यत्र देवदत्तस्य प्रयोज्य कर्तुः कर्मत्वं न स्यात् । आसधातोर्गत्यादिष्वनन्तर्भावात् । नचाकर्मकत्वात्तदन्तर्भाव इति वाच्यम् 'अकर्मकधातुभिर्योगे' इति मासस्य कर्मतया आसेरकर्मकत्वासम्भवात् इति प्रष्टुराशयः । अत्राहोत्तरदित्सुः—येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मकपदेन

गृह्यन्ते । आस्धातोश्च देशकालादिभिन्नं कर्म न सम्भवत्यतोऽसौऽकर्मक एव तेनास्धातोः प्रयोज्यकर्तुर्देवदत्तस्य कर्मत्वं गतिबुद्धीत्यादिना निर्बाधम् ।

२ प्र० ।

क्रोशं गिरिरित्यत्र—क्रोशपर्यन्तमविच्छिन्नोगिरिरित्यर्थेगिरिरूपेण द्रव्येणाध्वनोऽत्यन्तसंयोगे गम्ये 'कालाध्वनोः' इति द्वितीया । निरन्तरसंयोगोऽत्यन्तसंयोगः । गुणक्रियाद्रव्यैः कालाध्वनोरविच्छिन्नसंयोगे गम्ये । 'द्वितीयास्यादिति' एतद्वचनार्थः ।

अक्ष्णा काणः—इत्यत्र अक्षिविकारप्रयुक्तकाणत्ववानित्यर्थं 'येनाङ्गविकारः' इति अक्षिपदात्तृतीयाविभक्तिः । येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् इति सूत्रार्थः ।

यागाय याति—यष्टुं यातीति विग्रहे तुमर्थे यज्धातोः भाववचनाश्चेति घञि निष्पन्नाद् यागशब्दात् 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । तुमनः अर्थ इवार्थो यस्य स तुमर्थः । भाव उच्यतेऽनेनेति भाववचनः । क्रियावाचीति यावत् 'भाववचनाश्च' इति सूत्रेण विहितो यो घञस्तदन्ताच्चतुर्थी स्यादिति सूत्रार्थः ।

परिहरेः संसारः—अत्र हरिं वर्जयित्वा जनिमृतिचक्रात्मकं संसरणमित्यर्थे 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयत्वे 'पञ्चम्यपाङ्परिभिः' इति तद्योगे प मी । अपाङ्परिभिः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् इति सूत्रार्थः ।

कृष्णस्य हितमिति—अत्र 'चतुर्थी चाशिष्यायुष्य-' इत्यादिना हितयोगे चतुर्थी । आयुष्याद्यर्थयोगे चतुर्थी वास्यात्पक्षे षष्ठी इति वचनार्थः ।

चर्मणि द्वीपिनमिति—चर्मनिमित्तं द्वीपिनं हन्ति इत्यर्थे 'निमित्तात्कर्मयोगे सप्तमी वाच्या' इति निमित्तार्थे सप्तमी । निमित्तमिह फलम् । इष्टसाधनताज्ञानस्य प्रवर्तकतया फलस्यापि हेतुत्वम् । योगः सम्बन्धः । संयोगः समवायो वा ।

३ प्र० ।

आयतीगवम्—आयत्यो गावो यस्मिन्काले इति विग्रहे आयतीशब्दस्य गोशब्देन सह 'तिष्ठद्गुप्रभृतीनि च' इति समासः । तिष्ठद्ग्वादीनां समुदायानामेव निपातनात् आयतीशब्दस्य पुंवद्भावाभावाः समासान्तटच् प्रत्ययश्च । कृते टचि अवादेशः । तेन आयतीगवमिति साधु ।

परोक्षम्—अक्ष्णः परमिति विग्रहे परमित्यस्याक्षिशब्देन सह समासान्तविधानसामर्थ्यादव्ययीभावसमासे 'प्रतिपरसमनुभ्योऽक्ष्णः' इति गणसूत्रेण समासान्ते टचि सुब्लुकि 'परोक्षे लिट्' इति निपातनात् परशब्दस्य ओकारादेशे पररूपे च परोक्षाद् यथायथं सुप अम्भावे परोक्षमिति निष्पन्नम् ।

द्व्यहजातः—द्वयोरह्नोः समाहारः द्व्यह् इति विग्रहे 'तद्धितार्थे' इति समाहारे द्विगुः । 'राजाहः सखिभ्यष्टच्' इति टच् । 'अह्नष्टखोरेव' इति टिलोपः । 'न संख्यादेः समाहारे' इति अह्नादेशप्रतिषेधः । द्व्यहो जातस्येति विग्रहे 'कालाः परिमाणिना' इति समासे सुपोलुकि समासविधायकसूत्रे कालाः इति प्रथमानिर्देशात् द्व्यहशब्दस्योपसर्जनत्वे 'उपसर्जनं पूर्वम्' इति तस्य पूर्वनिपाते द्व्यहजात इति सिद्धम् ।

नक्रः—नक्रामतीत्यर्थेनञ्पूर्वात्क्रम्धातोर्निपातनात् ( नभ्राण्नपात्, इति सूत्रे ) डप्रत्यये डित्वाट्टिलोपे 'नलोपोनञः' इति प्राप्तस्य नञो लोपस्य 'नभ्राण्' इत्यादि सूत्रेण तस्य प्रकृतिभावविधानात्—लोपाभावविधानात्—निषेधे नक्रः इति पदं सिध्यति ।

इभयुवतिः—युवतिश्चासौ इभीचेति विग्रहे 'पोटायुवति' इत्यादिना इभीशब्दस्य युवति शब्देन सह समासे समासस्य प्रातिपदिकत्वात्सुपोलुकि अत्र समासविधायके सूत्रे जातिशब्दस्य प्रथमान्तत्वात् इभीशब्दस्य 'प्रथमानिर्दिष्टम्' इत्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वनिपाते 'पुंवत्कर्मधारय' इति पुंवत्वे । इभयुवति इति समासात्पुनः सौ रुत्वविसर्गयोश्च इभयुवतिरिति सिद्धम् ।

अतिङ्किम्—मा भवान्भूत् इत्यत्र भूदिति तिङन्तेन माङः समासनिवृत्यर्थमतिङ्ग्रहणम् ( भवानितिपदं समासाभावसूचनाय मध्ये प्रयुक्तम् ) ननु अतिङ्ग्रहणं व्यर्थम्, मा भवान्भूदित्यत्र सुपेत्यनुवृत्त्यव समासनिवृत्तिसम्भवात् । सत्यम् । एतदेवातिङ्ग्रहणं व्यर्थं सञ्ज्ञापयति अस्मिन्सूत्रे सुपेति नानुवर्तते । कुगतिप्रादय इति पूर्वसूत्रेऽपि 'गतिः' इति योग विभागे सुपेति न सम्बध्यते । तेन गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति प्राचीनपरिभाषा सिध्यति । तत्फलन्तु व्याघ्री, अश्वक्रीती, कच्छपी इत्यादिषु सुबुत्पत्तेः प्राक्समासे व्याघ्र-अश्वक्रीत-कच्छपानामदन्तत्वात् जातिलक्षणो ङीप् 'क्रीतात्करणपूर्वाद्' इति च ङीप् यथायथं निष्पद्यते । अमैवेतिसूत्रविवरणे एव कारद्वयम् । सूत्रोपात्तो

नियमलभ्यश्च उपपदमतिङ् इत्यनेनैव सिद्धे सूत्रस्यास्य नियमार्थत्वात्। तत्र सूत्रोपात्तैवकारेण अमूप्रत्ययमात्रविधायकशास्त्रेण अमैव सह यस्योपपदसंज्ञा विधीयते तदन्ययेन सह समस्यते नतु 'विभाषाग्रे प्रथमपूर्वेषु' इत्यादिषु अम्प्रत्ययेन क्त्वाप्रत्ययेन च सह विहीतोपपदसंज्ञानामग्रे प्रथमपूर्वादिनाम् 'अग्रे भोजनम्' इत्यादिषु समासः। नियमलभ्यैवकारेण च कालः समयो वेला वा भोक्तुमित्यत्र कालादीनां 'कालसमयवेलासु तुमुन्नि'ति सूत्रे सप्तमीनिर्देशे नोपपदत्वेऽपि तस्य तुमुनातुल्यविधानेनामातुल्यविधानत्वाभावात् न समासः।

प्र० ४।

द्व्यह्ना—द्वयोरह्नोर्भवेत्यर्थे तद्धितार्थेति द्विगौ टचि 'कालाट्ठञ्' इति ठञि तस्य 'द्विगोर्लुगनपत्ये' इति लुकि अदन्तत्वाट्टापि द्व्यह्नेतिरूपम्। नन्विह स्त्रीत्वं दुर्लभं 'रात्राह्नाहाः पुंसि' इति वचनादिति चेन्न। सर्वमहः सर्वाह्न इत्यादावुपक्षीणस्य तद्वचनस्य लुप्ततद्धितायामप्रवृत्तेः। किञ्च द्विगुप्राप्तापन्ना, इत्यादिना परवल्लिङ्गत्वे प्रतिषिद्धे तदपवादस्य 'रात्राह्नाहाः' इत्यस्याप्राप्तिरेव। एवञ्चात्रभवार्थकतद्धिते लुप्तेऽपि यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन भवार्थवत्तन्निष्ठस्त्रीत्वाभिधानं न्याय्यमेव। न चात्र ठञन्तत्वान्ङीप् स्यादिति शङ्क्यम्। ठञो लुप्तत्वात्। न च टजन्तत्वान्ङीप्स्यादेवेति वाच्यम्। टचः समासान्ततया तदन्तस्य तद्धितार्थे प्रत्युपसर्जनत्वात् द्विगोरिति ङीप्तु न शङ्क्य एव 'अपरिमाण' इति निषेधात्। अतष्टावेवात्रयुक्तः।

महाबाहुः—महान्तौ बाहू यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे, 'आन्महतः' इत्यात्वे महाबाहुरितिरूपम्। इदञ्च आन्महत इति सूत्रे समानाधिकरणग्रहणस्य प्रयोजनम्। तथाहि–महतः सेवा महत्सेवेत्यादि षष्ठीसमासस्य लाक्षणिकत्वम्। 'सन्महत' इत्यादि सूत्रविहितसमासस्तु प्रतिपदोक्तः। ततश्च लक्षणप्रतिपदोक्तपरिभाषया प्रकृतसूत्रे प्रतिपदोक्तसमासस्यैव ग्रहणे षष्ठीसमासे आत्वस्य प्राप्त्यभावात् किं समानाधिकरणग्रहणेन ? समानाधिकरणग्रहणसामर्थ्यात् सूत्रेऽस्मिन् लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्ततेऽतो महाबाहुरित्यत्र प्रतिपदोक्तत्वाभावेऽप्यात्वं निर्बाधम्।

षोडन्—षड् दन्ता यस्येति बहुव्रीहौ 'वयसि दन्तस्य दतृ' इति दन्तशब्दस्य दत्रादेशे ऋकारस्येत्संज्ञायां षष उत्वं 'दतृदशधासूत्तरपदादेष्टुत्वं च धासुवेति वाच्य-

म्' इति वार्त्तिकेन अन्त्यपकारस्य उत्वे आद्गुणे दकारस्य टुत्वेन डकारे निष्पन्नात् षोडत् शब्दात्सौ उगित्वान्नुमि हल्ङ्यादिना सुलोपे संयोगान्तलोपे च षोडन् इति रूपम् । संयोगान्तलोपस्यासिद्धत्वान्नलोपस्तु न ।

चित्राजरद्गुः—चित्राजरती गौर्यस्येति त्रिपदे बहुव्रीहौ 'स्त्रियाः पुंवत्' इति विहितः पुंवद्भावश्चित्राशब्देन प्रवर्तते सूत्रस्यास्योत्तरपदप्रकरणस्थत्वाच्चित्राशब्दस्य च मध्यमेन जरतीशब्देन व्यवधानात् उत्तरपदपरकत्वाभावात् । मध्यमे जरतीशब्दे तु प्रवर्तत एव उत्तरपदपरत्वात् । न चात्र उत्तरपदशब्देन पूर्वपदस्याक्षेपात् जरतीशब्दस्य च पूर्वपदत्वाभावात् कथमिह पुंवत्वमिति वाच्यम् । 'आनङृतो द्वन्द्वे' इति सूत्र इव प्रकृतसूत्रेऽपि ( स्त्रियाः पुंवदित्यत्र ) पूर्वपदस्यानाक्षेपात् । आनङ् ऋत इत्यत्र पूर्वपदस्यानाक्षेपे हि 'होतृपोतृनेष्टोद्गातारः' इत्युपान्तस्य नेष्टुरुदाहृत आनङ् भाष्यकारेण सङ्गच्छते । किञ्च प्रकृतसूत्रभाष्ये 'पट्वीमृदुभार्यः' इत्युपलभ्यमानः प्रयोगः चित्राजरत्यौ गावौ यस्येति द्वन्द्वगर्भेऽपि चित्राजरद्गुरिति प्रयोगं सूचयति ।

सापत्नः—सपत्न्या अपत्यमित्यर्थे शत्रुपर्यायं विवाहनिबन्धनञ्च पतिशब्दमाश्रित्य प्रवृत्ताभ्यां सपत्नीशब्दाभ्याम् 'तस्यापत्यम्' इत्यणं बाधित्वा 'स्त्रीभ्यो ढक्' इति ढकि प्राप्ते 'शिवादिभ्योऽण्' इत्यणि आद्यस्य सपत्नीशब्दस्य भाषितपुंस्कतया पुंवत्वे ङीपो निवृत्तौ सापत्न इति रूपम् । नकारस्य तु न निवृत्तिः शत्रुपर्यायसपत्नशब्दस्य अव्युत्पन्नप्रातिपदिकतया तत्र नकारस्य स्त्रीत्वनिमित्तकत्वाभावात् । द्वितीयस्य तु सपत्नीशब्दस्य ङीब्नत्वाभ्यामुत्पन्नस्य शिवाद्यणि कृते भाषितपुंस्कत्वाभावात् न पुंवत्वम् किन्तु ङीपो 'यस्येति च' इति लोपे सापत्न इति रूपम् ।

सापत्यः—सपत्न्या अपत्यमित्यर्थे स्वामिपर्यायं पतिशब्दमाश्रित्यप्रवृत्तात् सपत्नीशब्दात् 'तस्यापत्यम्' इत्यणं बाधित्वा 'दित्यदित्यादित्यपत्युत्तरपदाण्यः' इति ण्यप्रत्यये अस्य सपत्नीशब्दस्य भाषितपुंस्कत्वात् पुंवत्वे सति ङीब्नत्वयोर्निवृत्तौ यस्येतिचेतीकारलोपे सापत्य इति रूपम् । न चात्रापि शिवाद्यण् कथं नेति वाच्यम् शिवादौ रूढयोरेव ग्रहणात् । ( शत्रुपर्यायं पतिशब्दमाश्रित्यप्रवृत्तसपत्नशब्दो रूढः । विवाहनिबन्धनं पतिशब्दमाश्रित्यप्रवृत्तस्तु योगरूढः । स्वामिपर्यायं पतिशब्दमाश्रित्यप्रवृत्तस्तु केवलयौगिकः ) ।

दण्डादण्डि—दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति विग्रहे 'तत्र तेनेदमिति सरूपे' इति समासे सुब्लुकि 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घे 'इच्कर्मव्यतिहारे' इति समासान्ते इचि यस्येति चेत्यकारलोपे तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठादव्ययीभावत्वेऽव्ययत्वे च समासादुत्पन्नस्य सुपोलुकि दण्डादण्डि इति सिद्धम् ।

अग्नीषोमौ—अग्निश्च सोमश्चेति विग्रहे द्वन्द्वसमासे सुपो लुकि 'ईदग्नेः सोम वरुणयोः' इति अग्निशब्दस्य ईकारादेशे 'अग्नेः स्तुत्स्तोमसोमाः' इति षत्वे निष्पन्नादग्नीषोमशब्दात्, औकारविभक्तौ अग्नीषोमौ—इति सिद्धम् ।

निःश्रेयसम्—निश्चितं श्रेय इति विग्रहे कर्मधारयसमासे 'अचतुरविचतुर' इत्यादिना निपातनादचि निःश्रेयम् ।

प्र० ५ ।

दूढ्यः—दुःखेन ध्यायतीति विग्रहे दुरुपपदात् ध्यै चिन्तायामित्यस्माद्धातोः 'आतश्चोपसर्गे' इति कप्रत्यये 'आदेच उपदेश' इत्यात्वे 'आतोलोप इटि च' इत्यालोपे दुर् ध्य इति स्थिते पृषोदरादित्वात् रेफस्य उत्वे सवर्णदीर्घे धकारस्य ष्टुत्वे च दूढ्य इति ।

बृहस्पतिः—बृहती वाक् तस्याः पतिरिति विग्रहे षष्ठीसमासे पारस्करादिषु निपातनात् बृहतीशब्दस्य पुंवत्वे तकारलोपे सुटि च बृहस्पतिरिति सिद्धम् ।

अङ्गिरसः—अङ्गिरसोऽपत्यानि पुमांस इति विग्रहे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि तस्य 'अत्रिभृगुकुत्स' इत्यादिनालुकि जसि अङ्गिरस इति रूपम् ।

यौधेयी—युधाया अपत्यमिति विग्रहे तन्नामिकाणं बाधित्वा 'द्व्यचः' इति ढकि एयादेशे 'यस्येति च' इत्यकारलोपे आदिवृद्धौ यौधेयशब्दात् 'पर्श्वादियौधेयादिभ्योऽणञौ' इति स्वार्थे तद्राजसंज्ञके प्राच्यमिकेऽञि तस्य 'अतश्च' इति प्राप्तस्य लुको 'न प्राच्यभर्गादि' निषेधे यस्येतिचेत्यकारलोपे 'शार्ङ्गरवाद्यञः' इति ङीनि पुनरकारलोपे यौधेयी इति सिध्यति । यद्यपि अतश्चेत्यञो लुकि सत्यपि ढगन्तत्वात् 'टिड्ढाणञ्' इति ङीपि योधेयीति सिध्यति तथापि ङीपि सति 'अनुदात्तस्य यत्रोदात्तलोपः' इति ङाबुदात्तः स्यात् इष्यतेतु अञन्तत्वात् ङीनि आद्युदात्तत्वमिति अञोलुक् निषिध्यते ।

मानुष्यकम्—मनुष्याणां समूह इति विग्रहे 'गोत्रोक्षोष्ट्रोरभ्र' इत्यादिना

समूहार्थे वुञि तस्याकादेशे आपत्यस्य चेति प्राप्तस्य यलोपस्य 'प्रकृत्याऽके राजन्यमनुष्ययुवानः,' इति निषेधे यस्येतिचेत्यकारलोपे मानुष्यकम् ।

गार्भिणम्—गर्भिणीनां समूह इत्यर्थे गर्भिणीशब्दस्यानुदात्तादित्वात् 'अनुदात्तादेरञ्' इति प्राप्तमञं बाधित्वा भिक्षादित्वादणि आदिवृद्धौ 'भस्याढे तद्धिते' इति पुंवत्वेन ङीपोनिवृत्तौ गर्भिन् अ इति स्थिते 'नस्तद्धिते' इति टिलोपे प्राप्ते 'इनण्यनपत्ये' इति प्रकृतिभावात्तन्निषेधे गार्भिणमिति रूपम् ।

वात्या—वातानां समूह इति विग्रहे वातशब्दात् 'पाशादिभ्यो यः' इति यप्रत्यये स्त्रीत्वाट्टापि ( स्त्रीत्वं लोकात् ) वात्येति रूपम् ।

प्रागद्यः—प्रगदिन्शब्दात् 'वुञ्छण्' इत्यादिना चतुरर्थ्योञ्य प्रत्यये आदिवृद्धौ 'नस्तद्धिते' इति टिलोपे प्रागद्य इति सिद्धम् ।

श्यैनम्पाता मृगया—पतनं पातो भावे घञ् । श्येनस्य पात इति कृद्योगषष्ठ्यासमासः । श्येनपातोऽस्यां वर्तते इति विग्रहे कृद्ग्रहणपरिभाषया श्येनपातशब्दस्यापि घञन्तत्वेन 'घञः साऽस्यां क्रियेति ञः' इति ञप्रत्यये आदिवृद्धौ 'श्येनतिलस्य पाते ञे' इति मुमागमे मकारस्यानुस्वारपरसवर्णयोः स्त्रीत्वाट्टापि श्यैनम्पातेति निष्पन्नम् ।

पाणिनीया—पणिनोऽपत्यमित्यर्थे पणिन्शब्दात 'तस्यापत्यम्' इत्यौत्सर्गिकेऽणि निष्पन्नात्पाणिन्शब्दात् युवार्थे 'अत इञ्' इति इञि निष्पन्ने पाणिनिशब्दे 'ण्यक्षत्रियार्ष'इत्यादिना इञो लुग् न भवति आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । औत्सर्गिकस्य हि वस्तुगत्या ऋषिवाचित्वेऽपि प्रतिपदोक्तत्वं नास्ति । ततः पाणिना प्रोक्तमित्यर्थे'तेन प्रोक्तम्' इत्यणं बाधित्वा 'वृद्धाच्छः' इति छप्रत्यये ईयादेशे पाणिनीयशब्दो निष्पन्नः । न चात्र पाणिनिशब्दात्तद्धिते विवक्षिते 'यूनिलुक्' इतीञो लुकि सत्यपि प्रत्ययलक्षणेन इञन्तत्वमाश्रित्य छापवादोऽण् स्यादिति वाच्यम् । पणिनिशब्दे इञोयुवार्थकत्वात युवसंज्ञया गोत्रसंज्ञाया बाधात् । 'इञश्च' इति सूत्रे च गोत्रार्थकस्येञोग्रहणात् ततः पाणिनीयमधीते वेत्ति वेत्यर्थे पाणिनीयशब्दात् 'तदधीते तद्वेद' इत्यणि तस्य 'प्रोक्ताल्लुक्' इति लुकि स्त्रीत्वविवक्षायां टापि पाणिनीया इति निष्पद्यते । नन्वत्रासत्यपि अध्येतृवेदितृप्रत्ययस्याणो लुकि पाणिनीयशब्दः सिध्यत्येवेति किमर्थं लुग्विधीयते । सत्यम् । अणो लुगभावेस्त्रियामणन्तत्वात् 'टिड्ढाणञ्' इति ङीप् स्यात् स्वरे च भेदः स्यात् ।

प्र० ६ ।

वा—ननु वामदेवशब्दात् यप्रत्ययेऽपि 'यस्येति च' इति लोपेन सिद्धे टिलोपार्थं कथमिह डित्करणमिति चेत्सत्यम्। ययतोरेव विधौ 'ययतोश्चातदर्थे' इति नञः परस्य यदन्तस्यान्तोदात्तस्वरविधौ अनयोर्ग्रहणाभावार्थं डित्करणम्। तथा च वामदेव्यमित्यत्रान्तोदात्तो न भवति। डित्करणे तु सति स्वरविधावनयोर्न ग्रहणम्, निरनुबन्धकग्रहणे सति न सानुबन्धकस्य ग्रहणम्' इति परिभाषया 'तदनुबन्धकग्रहणे सति नातदनुबन्धकस्यग्रहणम्' इति परिभाषया वा तन्निवृत्तिर्भवति।

'बिल्वकादिभ्यश्छस्य लुक्' इति सूत्रे छग्रहणं कुकोनिवृत्तिर्माभूदित्यर्थम् अन्यथा सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपाय इति कुको निवृत्तिः स्यात् इदमेव चछग्रहणं परिभाषायां ज्ञापकमिति बोध्यम्।

१९१३

## प्रश्नपत्रम् ।

१ प्रातिपदिकार्थलिङ्गेति सूत्रे परिमाणग्रहणस्य प्रयोजनमुपपाद्यानुर्लक्षणे इति सूत्रप्रयोजनं निदर्शयत।

२ पुष्पेभ्यः स्पृहयति, पुष्पाणि स्पृहयति, ग्रामाद्बहिः, आसकलाद्ब्रह्म एषु विशेषविभक्ति विधायकानि त्राणि प्रदर्श्य कृति किम्, तद्धिते माभूत् इति फक्किका व्याख्यायताम्।

३ आयतीगवम्। शङ्कुलाखण्डः, तीर्थकाकः, युवजरती, द्व्यहः, बाहू बाहविः, पद्मगन्धिः, एतानि साधयत।

४ धानाशष्कुलिः, अग्निमारुतम्, गोष्ठश्वः, पदातिः अग्निमिन्धः, सुरापाणाः, प्राच्याः, एतानि कथं सिध्यन्ति।

५ कौञ्जायन्यः, वैनतेयः सौभागिनेयः गार्ष्टेयः, तार्क्ष्यः, पौरवः, कुन्ती, एतान् साधयत।

६ ड्यडयोर्डित्वप्रयोजनं समुपपाद्य कार्त्तिकिकः, कार्यं हविः, धैनुकम्, आजकरौणः नड्वलः एषां सिद्धिं प्रदर्शयत।

## उत्तराणि ।

प्र० १ ।

( २ ) वृक्षमनु विद्योतते विद्युत इत्यादौ ( चिह्न मात्रे ) लक्षणेत्थम्' इत्या-

दिनैव कर्मप्रवचनीयत्वसिद्धेः 'अनुर्लक्षणे' इत्यनेन आरम्भसामर्थ्यात् हेतुभूते लक्षणेऽनोः कर्मप्रवचनीयत्वं विधीयते । हेतुत्वस्य च तृतीयार्थत्वात् 'हेतौ' इति प्राप्ता तृतीया अनेन बाध्यते । तेन पर्जन्योजपमनुप्रावर्षदित्यत्र जपात्मकहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति शाब्दबोधे स्फुटं प्रतीयमानेऽपि हेतुत्वे द्वितीयैव न तु तृतीया । अत्रापि तृतीयायाम् 'अनुर्लक्षणे' इति सूत्रं निर्विषयं स्यात्' चिह्नमात्रे लक्षणेत्थमित्यादिना सिद्धेः हेतुभूते लक्षणे च हेतुत्वमादाय तृतीयया बाधात् ।

प्र० २ ।

पुष्पेभ्यः स्पृहयति—अत्र ,स्पृहेरीप्सित' इति पुष्पाणां सम्प्रदानत्वेन सम्प्रदाने चतुर्थी इयञ्च सम्प्रदानसंज्ञा ईप्सितमात्रे विधीयते यदा तु पुष्पाणामीप्सिततमत्वं विवक्ष्यते तदा परत्वात् । कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञैव तेन पुष्पाणि स्पृहयतीत्यत्र द्वितीयापि साधुः ।

ग्रामाद्बहिः—'अपपरिबहिरञ्चवः पञ्चम्या' इति बहिः शब्दस्य पञ्चम्यन्तेन समासो विधीयते नच बहिः शब्दयोगे पञ्चमी विहिता अतोऽस्मादेव ज्ञापकात् तत्र पञ्चम्यनुमीयते पञ्चम्यभावे हि तया समासविधानमनर्थकमेव स्यात् ।

आसकलादिति—-अत्र 'आङ्मर्यादावचने' इत्याङः कर्मप्रवचनीयत्वे 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी

कृति किं तद्धिते माभूदिति फक्किकाया व्याख्यानं कृतपूर्वीकटमिति प्रयोगव्याख्याने द्रष्टव्यम् ।

प्र० ३ ।

शङ्कुलाखण्डः—शङ्कुलया खण्ड इति विग्रहे शङ्कुला टा खण्ड सु इत्यलौकिकविग्रहे च 'तृतीया तत्कृतार्थेन गुणवचनेन' इति समासे समासत्वात् कृत्तद्धितेति प्रातिपदिकत्वे 'सुपोधातु' इति सुपोलुकि समासविधायकशास्त्रे तृतीया इत्यस्य प्रथमान्तत्वात् शङ्कुलाशब्दस्योपसर्जन संज्ञायां पूर्वनिपाते निष्पन्नात्शङ्कुला खण्डशब्दात् पुनः सौ रुत्वविसर्गयोश्च शङ्कुलाखण्डः इति सिध्यति ।

तीर्थकाकः—-तीर्थे काक इवेति विग्रहे 'ध्वाङ्क्षेण क्षेपे' इति सूत्रे ध्वाङ्क्षशब्देन तद्वाचिनां ग्रहणात् काकशब्देनापि समासे 'सुपो धातु' इति सुपोलुकि सप्तम्यन्तस्य तीर्थशब्दस्य 'प्रथमानिर्दिष्टमिति' उपसर्जनसंज्ञायां पूर्वनिपाते तीर्थकाक इति साधुः ।

युवजरती—युवतिश्चासौ जरती चेति विग्रहे 'युवा खलति' इत्यादि सूत्रे लिङ्गविशिष्टपरिभाषया युवशब्देन युवतिशब्दस्यापि ग्रहणात् कर्मधारय समासे सुपोलुकि प्रथमानिर्दिष्टत्वाद्युवतिशब्दस्योपसर्जनत्वेन पूर्वनिपाते 'पुंवत्कर्मधारय' इति पुंवत्वे अन्तर्वर्तिनी विभक्तिमाश्रित्य पदत्वान्नलोपे युवजरती इति निष्पद्यते। अत्र युवतिजरत्योः कथं समानाधिकरण्यमिति तु न शङ्क्यम्, युवत्यामेव जरती-धर्मोपलम्भेन तद्रूपारोपात्।

बाहूबाहवि:—बाहौ बाहौ च परस्परं गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहे 'तत्र तेनेदमिति सरूपे' इति समासे समासत्वात्प्रातिपदिकत्वे 'सुपो धातु' इति सुब्लुकि 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घे 'इच्कर्मव्यतिहारे' इति समासान्ते इचि 'यस्येति च' इति लोपं बाधित्वा 'ओर्गुणः' इति गुणेऽवादेशे तिष्ठद्गुप्रभृतिषु इचः पाठादव्ययीभावत्वेनाव्ययत्वे सुपोलुकि बाहूबाहवि:-इति रूपम्।

पद्मगन्धि:—पद्मगन्ध इव गन्धो यस्येति विग्रहे 'सप्तम्युपमानपूर्वपदस्य' इति समासे पूर्वपदान्तर्गतोत्तरपदगन्धशब्दस्य लोपे पद्मगन्धशब्दात् 'उपमानाच्च' समासान्ते इचि यस्येतिचेत्यकारलोपे पद्मगन्धिरिति रूपम्।

प्र० ४।

धानाशष्कुलि—धानाश्च शष्कुलयश्च तासां समाहार इति विग्रहे द्वन्द्वसमासे 'जातिरप्राणिनाम्' इत्येकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे नपुंसकह्रस्वे सोर्लुकि च धानाशष्कुलि इति सिद्धम्।

आग्निमारुतम्—अग्निश्च मरुच्चेति अग्नामरुतौ, अग्नामरुतौ देवते अस्येति विग्रहे 'सास्य देवता' इत्यणि तद्धितान्त प्रातिपदिकावयवत्वात्सुपो लुकि 'देवताद्वन्द्वेच' इत्युभयपदवृद्धौ 'इद्वृद्धौ' इति इकारेचोक्तं रूपं जायते, यद्यप्यत्र वृद्धेः प्रागेवान्तरङ्गत्वादानङः प्रवृत्तिरस्ति तथापि 'परिहृत्यापवाद विषयमुत्सर्गोऽभिनिविशते' इति न्यायादानङ् न भवति।

गोष्ठश्व:—'अचतुरविचतुरसुचतुरे'त्यादि सूत्रे गोष्ठे श्वा इति विग्रहे गोष्ठश्व इति अच्प्रत्ययान्तः निपात्यते।

पदातिः—पादाभ्यामततीति विग्रहे अतधातोः 'अज्यतिभ्यां पादे च' इतीण्प्रत्यये 'पादस्य पदाज्यातिगोपहतेषु' इति पादस्य पदादेशे च पदातिरिति सिद्ध्यति।

प्र० ५ ।

अग्निमिन्धः—अग्निमिन्धे दीपयतीति विग्रहे इन्धशब्दोत्तरपदे परतः 'आष्ट्राग्न्योरिन्धे' इति मुमागमे अग्निमिन्धइति निष्पन्नम् ।

सुरापाणाः प्राच्याः—पीयत इति पानम् । कर्मणि ल्युट् । सुरा पानं येषामिति विग्रहे बहुव्रीहौ समासे प्राच्यदेशे गम्ये 'पानं देशे' इति नकारस्य णत्वे च सुरापाणा इति रूपम् । प्राच्या इति देशविशेषद्योतनार्थं विशेषणम् ।

वैनतेयः—विनताया अपत्यमिति विग्रहे विनताशब्दात् 'स्त्रीभ्योढक्' इति ढकि, कित्वात् 'किति च' इत्यादि वृद्धौ ढस्य एयादेशे यस्येतिचेत्याकारलोपे च वैनतेय इति साधु ।

सौभागिनेयः—सुभगाया अपत्यमिति विग्रहे 'कल्याण्यादीनामिनङ् च' इति ढकि इनङादेशे च 'हृद्भगसिन्ध्वन्तेपूर्वपदस्य च' इति उभयपदवृद्धौ ढस्य एयादेशे च सौभागिनेय इति रूपम् ।

गार्ष्टेयः—गृष्टेरपत्यमिति विग्रहे गृष्टिशब्दात् 'गृष्ट्यादिभ्यश्च' इति ढकि 'किति च' इत्यादिवृद्धौ ढस्य एयादेशे यस्येति च' इतीकारलोपे गार्ष्टेय इति सिध्यति ।

ताक्ष्णः—तक्ष्णोऽपत्यमिति विग्रहे तक्षन् शब्दात् 'तक्ष्णोऽण उपसंख्यानम्' इति अण्प्रत्यये 'नस्तद्धिते' इति प्राप्तस्य टिलोपस्य अनितिप्रकृतिभावान्निषेधे 'षपूर्वहन्धृतराज्ञामणि'इत्यनोऽकारलोपे रषाभ्यामिति णत्वे च ताक्ष्ण इति रूपम् ।

पौरवः—पुरूणां राजेति विग्रहे पुरुशब्दात् 'पुरोरण्वक्तव्यः' इत्यणि आदिवृद्धौ 'ओर्गुणः' इति गुणे पौरवः इति निष्पन्नम् ।

कुन्ती—कुन्तेरपत्यं स्त्री इति विग्रहे 'वृद्धेत्कोसला' इति ञ्यङि तस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति लुकि 'इतो मनुष्यजातेः' इति ङीषि यस्येतिचेतीकारलोपे कुन्तीति साधु ।

प्र० ६ ।

कार्तिकिकः—कार्तिकी पौर्णमास्यस्मिन्मासे इति विग्रहे कार्तिकीशब्दात् 'विभाषा फाल्गुनी' इत्यादिना पाक्षिके ठकि 'ठस्येकः' ठकारस्येकारादेशे यस्येति चेतीकारलोपेच कार्तिकिक इति रूपम् ।

**धनुकम्**—धेनूनां समूह इति विग्रहे 'अचित्तहस्तिधेनोष्ठक्' इति ठकि आदिवृद्धौ 'इसुसुक्तान्तात्कः' इति ठस्य कादेशे धनुकमिति रूपम् ।

**आजकरौणः**—अजकरोण्या निर्वृत्त इत्यर्थे 'रोणी' इति सूत्रे प्रत्ययविधावपि भाष्य स्वरसात्तदन्तविधेरभ्युपगमात् रोणी शब्दान्तादण्यणि आदिवृद्धौ यस्येति चेतीकारलोपे आजकरौणः इति रूपम् ।

**नड्वलः**—नडा अस्मिन्सन्तीति विग्रहे 'नडशादाड्ड्वलच्' इति ड्वलचि डित्वाट्टिलोपे नड्वलः-इति सिध्यति ।

## १९१५

## प्रश्नपत्रम्

### प्र० १ ।

सर्पिपोऽपि स्यात् इति फक्किकां समुपपाद्य, हिमवतो गङ्गा प्रभवति, दक्षिणेन ग्रामं ग्रामस्य वा, इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । एतेषु विशेषविभक्तिविधायकानि सूत्राणिप्रदर्शयत ।

उ०—सर्पिपोऽपिस्यादित्यत्र अपिः पदार्थसम्भावनेत्यादि सूत्रेणापिशब्दस्य कर्म्मप्रवचनीयसंज्ञाविधानेनोपसर्गसंज्ञाया बाधादुपसर्गप्रादुर्भ्यामिति स्यादित्यस्य सकारस्य षत्वन्नेत्यर्थः । पदस्याप्रयुज्यमानपदान्तरस्यार्थः पदार्थस्तद्योतकोऽपि कर्म्मप्रवचनीयसंज्ञकः । एवञ्चाप्रयुज्यमानस्य विन्दुरित्यादेः पदस्यार्थोपि द्योत्यः । उपसंवादाशङ्कयोश्चेति सूत्रस्थभाष्यपठितेन उपसंवादाशङ्कयोर्लिङ्, इति वार्तिकेन सम्भावनायां लिङ् । तत्राशङ्कोत्प्रेक्षा सम्भावनापि उत्कटकोटिकाऽशङ्कैवेति भावः। तस्या सम्भावनाया विपयीभूते भवने कर्तृदौर्लभ्य प्रयुक्तदौर्लभ्यवत्वरूप सम्बन्धोऽपिद्योत्यः विन्दुनाकर्तृत्वादुक्तसम्बन्धेनस्यात्पदवाच्य क्रियायामन्वीयत इत्यर्थस्तदाह अपिशब्द बलेनेत्यादि एवञ्च सर्पिरवयवविन्दुदोर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका सम्भावनेति बोधः । नत्वेव कर्म्म प्रवचनीयसंज्ञकापि द्योत्येर्थे सर्पिपोऽन्वयेन तस्य कर्म्मप्रवचनीय युक्तत्वात् द्वितीयास्यादिति तन्न सर्पिपो विन्दुना योगात् नत्वपिनेत्युक्तत्वात् । न च परम्परया तेनापि योग एवेति वाच्यम् कर्म्मप्रवचनीयद्योत्योक्तसम्बन्धेनापि शब्देऽन्वयाभावात् ।

**हिमवतो गङ्गा प्रभवति**—अत्र 'भुवः प्रभवः' इति हिमवतोऽपादानत्वात्पञ्चमी ।

दक्षिणेनेति—दक्षिणशब्दात् 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इत्यप् प्रत्यये दक्षिणेनशब्दस्तद्योगे 'एनपा द्वितीया' इति ग्रामशब्दाद्द्वितीया, एनपेतियोगविभागाच्च षष्ठ्यपि ततो ग्रामं ग्रामस्येति विभक्तिद्वयं साधु।

इहस्थ इति—इह तिष्ठन्नयमिष्वासः इषुणाक्रोशोत्तरसमीपदेशे लक्ष्यं विध्येदिति वाक्यार्थः अत्र कर्तृत्वकर्मत्वशक्त्योर्मध्यस्थादध्ववाचकात् क्रोशशब्दात् सप्तमीपञ्चम्यौ कारकमध्ये इति सप्तमीपञ्चम्यौ।

प्र० २।

भूतपूर्वे चरडितिनिर्देशाद् भूतशब्दस्य पूर्वनिपात इति ग्रन्थमुपपाद्य स्त्रियामदन्तत्वाट्टाप् द्व्यक्षा इत्यस्याशयं प्रकाशयत।

उ०—ननु पूर्व भूत इति विग्रहे सुपेति समासे सुपोलुकि सुबन्तं सुबन्तेन समस्यते इति समासशास्त्रे सुबन्तं प्रथमानिर्दिष्टम् सुबन्तत्वञ्चद्वयोरप्यविशिष्टम्। ततश्च 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्युपसर्जनत्वस्य द्वयोरप्यविशिष्टत्वात् 'उपसर्जनं पूर्वम्' इत्यन्यतरस्य पूर्वनिपाते विनिगमनाविरहात् पर्यायेण द्वयोरपिपूर्वनिपातः स्यादत आह—'भूत-पूर्वेचरडिति। अस्मान्निर्देशात् भूतशब्दस्यैव पूर्वनिपातो नतु पूर्वशब्दस्येति भावः।

प्र० ३

पूतिगन्धिः, बहुश्रेयसी, आग्निमारुतंकर्म, पुत्रौ, गाव मा:, एते कथं सिध्यन्ति।

उ०–पूतिगन्धिरिति—पूतिः ( असुरभिः ) गन्धो यस्येति विग्रहे बहुव्रीहौ समासे सुपोलुकि 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति इकारान्तादेशे समासत्वेन प्रातिपदिकत्वात्सौ पूतिगन्धिरिति निष्पन्नम्।

बहुश्रेयसी—बह्व्यः श्रेयस्यो यस्येति विग्रहे बहुव्रीहौ समासे सुपोलुकि गोस्त्रियोरिति प्राप्तस्य ह्रस्वस्य 'ईयसो बहुव्रीहेर्नेति वाच्यम्' इति वार्तिकेन निषेधे 'नद्यृतश्च' इति नित्यं प्राप्तस्य कपः 'ईयसश्च' इति सूत्रेण निषेधे समासादुत्पन्नस्य सोः हल्ङ्यादिना लोपे च बहुश्रेयसी इति सिध्यति।

पुत्रौ—पुत्रश्च दुहिताश्चेति द्वन्द्वसमासे सुपोलुकि 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इति दुहितृशब्दस्यलोपे, 'शिष्यमाणो लुप्यमानार्थाभिधायी' इति नियमात् पुत्रशब्दादौकारविभक्तौ पुत्राविति रूपम्।

गाव इमाः—गौश्च गौश्च गौश्च इति पुल्लिङ्गस्त्रीलिङ्गेषु गोशब्देषु सहविवक्षितेषु

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri



'पुमान् स्त्रिया' इत्येतद्बाधित्वा स्त्री शिष्यते । नच स्त्रीशेषे पुंशेषे वा न कोपि रूपभेद इति वाच्यम् । गोशब्दस्य रूपाभेदेऽपि अनुप्रयोगे रूपभेदात । अतएव स्त्री शेषात् इमाः इति स्त्रीलिङ्गस्यानुप्रयोगः । पुं शेषे तु इमे इति पुल्लिङ्गानुप्रयोगः स्यात ।

प्र० ४ ।

पदष्ठीवम्, किं सखा, जात्यन्धः, अप्सव्यः, भ्रुकुंसः, कपीवहम्, एषां साधुत्व-विधायकानि कानि सूत्राणि ।

उ०—पदष्ठीवम्—पादौ चाष्ठीवन्तौ चेति द्वन्द्वसमासे सुपोलुकि 'अचतुरवि-चतुर' इत्यादिना निपातनात द्वन्द्वादचि प्राण्यङ्गत्वात् 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावे भसंज्ञाऽभावेपि निपातनादेव पादशब्दस्य पद्भावे पदष्ठीवमिति रूपम् ।

किं सखा—कुत्सितः सखेति विग्रहे किं शब्दस्य सखिशब्देन सह कर्मधारय-समासे सुपोलुकि 'राजाहः सखिभ्यष्टच्' इति प्राप्तस्य टचः 'किमः क्षेपे' इति निषेधात् समासत्वेन प्रातिपदिकत्वात्समुदायात्सौ अनङादिषु च कृतेषु किंसखेति रूपम् ।

जात्यन्धः—अत्र जनुषान्ध इत्युदाहरणम्, जात्यन्ध इति तु तदर्थकथनम् । जनुषा अन्ध इति विग्रहे 'तृतीया' इति योगविभागात्तृतीयासमासे 'सुपोधातु' इति प्राप्तस्य तृतीयाया लुको 'पुंसानुजो जनुषान्ध इति च' इति वार्तिकेन निषेधे जनु-षान्ध इति रूपम् । जात्यन्धं इत्यपि प्रत्युदाहररूपेण तृतीयाया लुकि सङ्गमनीयम् ।

अप्सव्यः—अप्सुभव इति विग्रहे दिगादित्वाद्यति कृत्तद्धितेति तद्धितान्तस्य प्रातिपदिकसंज्ञायां 'सुपो धातु' इति प्राप्तस्य सप्तम्यालुकः 'अपोयोनियन्मतुषु' इति वार्तिकेन निषेधे 'ओर्गुणः' इति गुणे 'वान्तोयि' इत्यवादेशे च अप्सव्य इति रूपम् ।

भ्रुकुंसः—भ्रुवा कुंसो भाषणं शोभा वा यस्य स इति विग्रहे निष्पन्ने भ्रूकुं-सशब्दे 'इको ह्रस्व' इति सूत्रप्राप्तस्य 'इयङुवङ्भाविनामव्ययानाञ्च नेति वाच्यम्' इति वार्तिकेन निषिद्धस्य ह्रस्वस्य 'अभ्रूकुंसादीनामिति वक्तव्यम्' इति वार्तिकेन पुनः प्रति प्रसवे भ्रुकुंस इति रूपम्

कपीवहम्—कपीनां वहम् कपीवहम् । वहशब्दः पचाद्यजन्तः 'इकोवहेऽपी-लोः' इति कपिशब्दस्य दीर्घः ।

प्र० ५ ।

जैवन्तायनः, कौलेयकः, मन्त्री, वैयाघ्रः, कार्णच्छिद्रकः । एषां साधुत्वप्रक्रिया-प्रदर्शनीया ।

उ०-जैवन्तायनः—जीवन्तस्यापत्यमित्यर्थे जीवन्तशब्दात् 'द्रोणपर्वतजीवन्तादन्यतरस्याम्' फकि कित्वात् 'किति च' इति आदिवृद्धौ फस्यायन्नादेशे जैवन्तायन इति सिध्यति ।

कौलेयकः—कुलशब्दात् 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति ढकञ्प्रत्यये ञित्वादादिवृद्धौ ढस्य एयादेशे यस्येति चेत्यकारलोपे च कौलेयकः-इति रूपम् ।

मद्री—मद्रस्यापत्यं स्त्रीत्यर्थे मद्रशब्दात् 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इत्यणि तस्य 'अतश्च' इति लुकि प्रत्ययलक्षणमाश्रित्यापत्यप्रत्ययान्तत्वेन जातित्वात् 'जातेरस्त्री' इति ङीपि यस्येतिचेत्यकारलोपे मद्रीति निष्पद्यते ।

वैयाघ्रः—व्याघ्रस्य विकारः चर्म इत्यर्थे 'प्राणिरजतादिभ्योऽञ्' इत्यञि 'नद्वाऽस्थाम्' इत्यचि वैयाघ्रम् । वैयाघ्रेण ( व्याघ्रचर्मणा ) परिवृतो रथ इत्यर्थे वैयाघ्रशब्दात् 'द्वैपवैयाघ्रादञ्' इत्यञि यस्येतिचेत्यकारलोपे वैयाघ्रः-इति रूपम् ।

कार्णच्छिद्रकः—कर्णच्छिद्रकेण निर्वृत्त इत्यर्थे कर्णच्छिद्रकशब्दात् 'कोपधाच्च' इत्यण् आदिवृद्धिः ।

प्र० ६ ।

भीमसेन, उग्रसेन, विश्वक्सेन, इत्येतेभ्योऽपत्यार्थे प्रत्यये कृते कीदृशानि रूपाणि भवन्ति तानि प्रदर्शनीयानि ।

उ०—भीमसेनो नाम कुरुवंश्यः तस्मात् 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् प्राप्तः, सेनान्तलक्षणो ण्यश्च प्राप्तः तत्र परत्वात् ण्य एव तथाच भैमसेन्य इति तस्य रूपम् ।

उग्रसेनो नामान्धकः तस्मादप्युभयप्राप्तौ परत्वाण्ण्यप्रत्यये औग्रसेन्यः—इति रूपम् ।

एवं विश्वक्सेनो नाम वृष्णिः तस्मादप्युभयप्राप्तौ परत्वाण्ण्ये वैश्वक्सेन्य इति रूपम् ।

१९१६

प्र० १ ।

पापेऽभिनिवेशः, धर्मात्प्रमाद्यति, परिहरेः संसारः, नेताऽश्वस्य स्रुघ्नम्, यदग्रमामधिकरिष्यति एतान्प्राकरणिककार्यनिर्देशपुरस्सरं साधयित्वा कर्त्तुरिति सूत्रे समग्रग्रहणस्य गतिबुद्धीति सूत्रे अणिग्रहणस्य च प्रयोजनं ब्रूहि ।

उ०–पापेऽभिनिवेशः–इत्यत्र 'अभिनिविशश्च' इति सूत्रेण पापरूपाधारस्य प्राप्तापि कर्मसंज्ञा, सूत्रेऽस्मिन् 'परिक्रयणे' इत्यतोऽन्यतरस्यां ग्रहणानुवृत्तेः, तस्य च व्यवस्थितविभाषाश्रयणात्, निषिध्यतेऽतो कर्मसंज्ञात्वाभावान्न द्वितीयाऽपित्वाधारसप्तम्येव ।

धर्मात्प्रमाद्यति––अत्र धर्मस्य 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति अपादानत्वादपादाने पञ्चमी ।

नेताऽश्वस्य स्रुघ्नम्–इत्यत्र अश्वः प्रधानकर्म, स्रुघ्नस्तु गुणकर्म । नयतिर्द्विकर्मकः । तत्र प्रधानकर्मणि अश्वे 'कर्तृकर्मणोः कृति, इति नित्याषष्ठी-गुणकर्मणि स्रुघ्नेतु 'गुणकर्मणि' नेष्यते इत्यनेन पाक्षिकी षष्ठी तत्र षष्ठ्यभावे द्वितीयायां नेताऽश्वस्यस्रुघ्नमिति साधु ।

यदत्रमामधिकरिष्यति–अत्र 'विभाषा कृञि' इतिसूत्रेणाधेः कर्मप्रवचनीयत्वात् तद्योगे मामिति 'कर्मप्रवचनीययुक्ते द्वितीयेति' द्वितीया ।

तमब्ग्रहणेति––तमब्ग्रहणं किमर्थम् । अवयवद्वारा समुदायस्य प्रश्नः कर्तुरुद्देश्यं कर्म इत्येव सूत्रं कार्यम् । तथा च पयसा ओदनं भुंक्ते इत्यत्र कृतभोजनस्य देवदत्तस्य पुनर्भोजने पयस उद्देश्यत्वेन कर्मसंज्ञापत्तिः । इप्सित तमग्रहणेतु ओदनस्यैवेप्सिततमत्वेन कर्मत्वात् पयसो अनीप्सितत्वान्न दोषः । यदा तु पयस ईप्सिततमत्वं तदा पयः पिबतीति पयसः कर्मसंज्ञा भवत्येव ।

अणिग्रहणस्येति–गमयति देवदत्तो यज्ञदत्तं तमपरः प्रयुङ्क्ते गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः अत्र ण्यन्तस्य गमयतेः कर्तुर्देवदत्तस्य कर्मसंज्ञा माभूदित्येतदर्थं गतिबुद्धीति सूत्रेऽणिग्रहणमन्यथाऽत्रापि देवदत्तस्य कर्मत्वे तस्माद् द्वितीया स्यात् ।

प्र० ५ ।

प्रत्यर्थम्, परोक्षम्, उपसमिधम्, तीर्थकाकः, एकनाथः, राजान्तरम्, पदेकृत्य एतान् साधय ।

उपसमिधम्––समिधः समीपे इति विग्रहे 'अव्ययं विभक्ति' इत्यादिना समीपार्थकस्य उपेत्यव्ययस्य समिध इति षष्ठ्यन्तेनाव्ययीभावसमासे 'झयः' इति पाक्षिके टचि सुब्लुकि टचः समासावयवत्वेन तदन्तस्याव्ययीभावसमासत्वात् 'नाव्ययीभावात्' इति सुपोऽमि उपसमिधम् इति निष्पद्यते ।

एकनाथः--एकश्चासौ नाथश्चेति विग्रहे 'पूर्वकालैक' इत्यादिना कर्मधारय-समासे समासत्वेन 'कृत्तद्धितेति' प्रातिपदिकत्वे 'सुपोधातु' इति सुपोलुकि समासात्पुनः सौ रुत्वविसर्गयोः एकनाथः ।

राजान्तरम्--अन्यो राजेति विग्रहे नित्यसमासत्वेनास्वपदविग्रहत्वात् अन्यपर्यायेण अन्तरशब्देन सह राजन्शब्दस्य मयूरव्यंसकादित्वात्समासे सुब्लुकि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे राजान्तरमिति सिद्धम् ।

पदेकृत्य--पदमित्यस्य कृत्वेतियोगे 'मध्येपदेनिवचने च' गतित्वात् 'कुगतिप्रादयः' इति समासे निपातनादेदन्तत्वे च 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वो ल्यपि पदेकृत्येति सिध्यति ।

प्र० ३ ।

आग्नेयः, सर्वमयः, त्रिककुदः, विश्वदेवः, शीतोष्णे उदकेस्तः, राजवर्चसम् , सुपन्थिः, रम्ययूना, एषु विशेषकार्यान्निर्दिश्य केशाकेशि इत्यस्य द्वितीयादौ रूपं-प्रदर्शय ।

उ०-आग्नेयः—अग्नायी ( अग्नेः स्त्री ) देवताऽस्येत्यर्थे 'अग्नेर्ढक्' इति ढकि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् ततो ढस्य एयादेशे 'भस्याऽढे तद्धिते' इति पुंवद्भावे ङीवैत्वनिवृत्तौ अग्नि एय इति स्थिते 'यस्येति च' इतीकारलोपे आदिवृद्धौ आग्नेय इति रूपम् । अत्र अढे इति प्रतिषेधात्कथं पुंवद्भाव इति न शङ्क्यम्, 'स्त्रीभ्यो ढक्' इति विहितस्यैव ढस्यात्र ग्रहणात् । तथाग्रहणेतु व्याख्यानमेव शरणम् ।

सर्वमयः--सर्वस्या आगत इति विग्रहे सर्वाशब्दात् 'ततआगतः' इत्यधिकारे 'मयट् च' इति मयटि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावे सर्वमय इति सिद्धम् ।

त्रिककुदः--त्रीणि ककुदानि यस्येति विग्रहे बहुव्रीहौ समासे पर्वतसंज्ञाभावात् 'त्रिककुत्पर्वते' इति विधीयमानसमासान्ताकारलोपाभावे त्रिककुदः-इति निष्पद्यते ।

विश्वदेवः--विश्वेदेवा अस्येति विग्रहे बहुव्रीहौ 'शेषाद्विभाषा' इति प्राप्तस्य कपः 'न संज्ञायाम्' इति निषेधे विश्वदेवः ।

शीतोष्णे उदके--शीतञ्चोष्णञ्चेति विग्रहे शीतोष्णशब्दयोः द्रव्यवाचित्वा त्

'विप्रतिषिद्धञ्चानधिकरणवाचि' इति न समाहारद्वन्द्वोऽपि तु इतरेतरयोग एव। अत्र वैकल्पिकसमाहारद्वन्द्वस्य 'चार्थे द्वन्द्वः' इति सूत्रेण सिद्धत्वात् विरुद्धार्थानां यदि समाहारद्वन्द्वो भवति तर्ह्यद्रव्यवाचिनामेवेति नियमात्। अत्र उदके इति विशेष्यनिर्देशात् तद्विशेषणयोः शीतोष्णशब्दयोर्द्रव्यवाचित्वम्।

राजवर्चसम्--राज्ञो वर्च इति विग्रहे षष्ठीतत्पुरुषे राजवर्चस्शब्दात् 'पल्यराजभ्यां चेति वक्तव्यम्' इति वार्तिकेन अचि राजवर्चसमिति रूपम्।

सुषन्धिः--शोभनः सन्धिः सुषन्धिः। सुषामादित्वात्सस्य मूर्धन्यादेशः।

रम्ययूना--रम्यश्चासौ युवाचेति विग्रहे कर्मधारयसमासे रम्ययुवन् शब्दात्तृतीयैकवचने टाविभक्तौ नकारस्य प्रातिपदिकान्तनकारत्वात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति प्राप्तस्य णत्वस्य 'युवादेर्न' इति निषेधे रम्ययूनेति निष्पन्नम्।

केशाकेशि--इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावादव्ययत्वेन सुपो लुक्त्वात् द्वितीयादिष्वपि केशाकेशि इत्येव रूपम्।

प्र० ४।

गोत्रेस्वैकोनेति कारिकां व्याख्याय शौनकः, भाद्रमातुरः, गौधेरः, सामनः, गार्गीपुत्रकायणिः, एतानपि साधय।

शौनकः--शुनकस्यापत्यमवात्स्य इत्यर्थे शुनकशब्दात् वात्स्यगोत्राभावात् फगभावेबिदादित्वादञि आदिवृद्धौ यस्येतिचेत्यकारलोपे शौनक इति रूपम्।

भाद्रमातुरः--भद्रा चासौ माताचेति भद्रमातातस्या अपत्यमित्यर्थे भद्रमातृशब्दात् 'मातुरुत्संख्यासंभद्रपूर्वायाः' इत्यणिऋकारस्योदादेशे रपरत्वे आदिवृद्धौ भाद्रमातुरः इति सिद्धम्।

गौधेयः--गोधाया अपत्यमित्यर्थे गोधाशब्दस्य शुभ्रादित्वात् ढकि ढकारस्य एयादेशे कित्वादादिवृद्धौ 'यस्येतिच' इत्याकारलोपे गौधेयः--इति सिद्धम्।

सामनः--साम्नोऽपत्यमित्यर्थेऽणि षपूर्वत्वाभावात् 'षपूर्वहन्धृतराज्ञामणि' इत्यल्लोपाभावे 'नस्तद्धिते' इति प्राप्तस्य टिलोपस्य 'अन्' इति प्रकृतिभावेन निषेधे सामनः इति--रूपम्।

गार्गीपुत्रकायणि--गार्गीपुत्रस्यापत्यमिति विग्रहे 'पुत्रान्तादन्यतरस्याम्' इति फिञि कुगागमे च, फकारस्यायन्नादेशे गार्गीपुत्रकायणिरिति निष्पन्नम्।

प्र० ५ ।

दैवयज्ञा, श्रवणारात्रिः, उख्यम्, शुनासीर्यम्, गाणिक्यम्, पाणिनीयम् एतान् पङ्क्तिव्याख्यानपुरस्सरं साधय ।

उ०—दैवयज्ञा—देवयज्ञस्यापत्यं स्त्रीति विग्रहे 'अत इञ्' इतीञ्प्रत्यये तस्य 'दैवयज्ञिशौचिवृक्षि' इत्यादिना पाक्षिके ष्यङि दैवयज्ञेति रूपम् । षङभावपक्षेच 'इतोऽमनुष्य जातेः' इति ङीषि दैवयज्ञीति रूपम् । अयञ्चष्यङ् सूत्रेणानेनागोत्रार्थमारभ्यते, अणिञोरितिसूत्रे शास्त्रीयगोत्रग्रहणेऽनन्तरापत्यार्थम्, तत्र लौकिकगोत्रग्रहणेतु अणिञोरिति नित्ये प्राप्ते विकल्पार्थमिदमारभ्यत इति बोध्यम् ।

श्रवणारात्रिः—श्रवणेन युक्ता रात्रिरित्यर्थे श्रवणशब्दात् 'नक्षत्रेण युक्तः कालः' इत्यणि तस्य संज्ञायां श्रवणाश्वत्थाभ्याम्' इति लुपि विभाषा फाल्गुनीति सूत्रे श्रवणेति निर्देशस्य सामान्यापेक्षत्वात् अपौर्णमास्यामपि युक्तवद्भावाभावे श्रवणारात्रिरिति सिध्यति ।

उख्यम्—उखायां संस्कृतमिति विग्रहे उखाशब्दात् शूलोखाद्यत्' इति यति यस्येति चेत्याकारलोपे उख्यम् इति निष्पन्नम् ।

शुनासीर्यम्—(शुनोवायुः, सीर आदित्यः । शुनश्च सीरश्चेति शुनासीरौ देवताद्वन्द्वे च' इत्यानङ् । शुनासीरावस्य स्त इति शुनासीरः ) शुनासीरो देवता अस्येति विग्रहे 'द्यावा पृथिवी' इत्यादिना पाक्षिके यति यस्येतिचेत्यकारलोपे शुनासीर्यमिति ।

गाणिक्यम्—गणिकानां समूह इति विग्रहे गणिकाशब्दात्समूहार्थे 'गणिकाया यञ् वक्तव्य इति यञि आदिवृद्धौ यस्येति चेत्याकारलोपे गाणिक्यम्–इति सिध्यति ।

१६१७

प्र० १ ।

अनुर्लक्षणे हेतौ, रुध्हेरीप्सितः, यतश्च निर्धारणम् । इमानिसूत्राणि सोदाहरणानि व्याख्येयानि ।

उ०—लक्षणे ( लक्ष्यलक्षणभावसम्बन्धे ) द्योत्येऽनुः कर्मप्रवचनीयसंज्ञः स्यात् । पर्जन्यो जपमनुप्रावर्षत् इत्युदाहरणम् । ( कदा पर्जन्योऽवर्षदिति प्रश्ने उत्तरमिदम् ) अत्र वृष्टिकालउपदेश्यः ( सच दुर्ज्ञानत्वात् शाखाग्रं प्रति द्विकलश्चन्द्र

इतिवत् प्रज्ञानं किञ्चिदवलम्ब्यैव ज्ञाप्यः ) जपः प्रज्ञानम् । हेतुभूतजपो लक्षणम् । वर्षहेतुभूतवरुणजपोत्तरकाले पर्जन्यः प्रावर्षत् । तत्र लक्षणत्वं हेतुत्वञ्चेति द्वयं तृतीयार्थः तदुभयमनुना द्योत्यते । यद्यप्यत्र 'लक्षणेत्थम्भूत' इत्यादिना सिद्धेः पुनः संज्ञाविधानसामर्थ्यात् परापि हेतौ तृतीयाऽनेन बाध्यते ।

हेतौ—हेत्वर्थे तृतीया स्यादिति सूत्रार्थः । ननु हेतोरपि करणत्वादेव तृतीया सिद्धेः किमर्थमिदमितिचेन्न हेतुत्वकरणत्वयोर्भेदात् । तथाहि-द्रव्यं गुणं क्रियाञ्च प्रति यज्जनकं तत्र सर्वत्र हेतुर्वर्तते किञ्च द्वारीभूतव्यापारवति तद्रहिते च सः । क्रियाजनकमात्रवृत्ति व्यापारवृत्ति च यत्तदेव करणम् । दण्डेन घटः इत्युदाहरणे घटं प्रति दण्डो हेतुः । दण्डे व्यापारसत्वेऽपि क्रियाजनकत्वाभावात्करणत्वं न । पुण्येन दृष्टो हरिरित्युदाहरणे हरिदर्शनं प्रति पुण्यस्य हेतुत्वम् । पुण्यस्य हरिदर्शनजनकत्वेऽपि निर्व्यापारत्वान्न कारणत्वम् । अत्र हेतुपदेन फलमपि गृह्यते तेन अध्ययनेन वसति इत्यत्र वासफलाध्ययनेऽपि विवक्षिते तृतीया ।

स्पृहेरीप्सितः—स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् । पुष्पेभ्यः स्पृहयति इत्युदाहरणम् । यदातु ईप्सितत्वमात्रस्य विवक्षा नतु प्रकर्षस्य तदा परत्वात्कर्मसंज्ञायां पुष्पाणि स्पृहयति इत्यपि भवति ।

यतश्चनिर्धारणम्—यस्मात्समुदायात् एकदेशस्य जातिगुणक्रियासंज्ञाभिः पृथक्करणं गम्यते तस्मात्षष्ठीसप्तम्यौ स्तः इति सूत्रार्थः । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा गच्छतां गच्छत्सु वा धावञ्छीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः ।

प्र० २ ।

एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम् सुप्सुपेति तु न नित्यसमास इत्याद्युपपाद्य पारेमध्ये षष्ठ्या वेति सूत्रस्थवाग्रहणस्य प्रयोजनं प्रदर्शयत ।

उ०—ननु 'प्राक्कडारात्समासः' इत्यतऊर्ध्वम् 'सहसुपा' इत्यतः प्रागेव कुतो विभाषाधिकारो नकृत इत्यत्राह । एतत्सामर्थ्यादिति-मध्ये विभाषाधिकारपाठसामर्थ्यादेवेतः प्राचीनानां नित्यसमासत्वं गम्यत इत्यर्थः । नन्वेवं सुप्सुपा' इत्यपि नित्यः स्यात् । इष्टापत्तौतु पूर्वभूत इति लौकिकविग्रहवाक्यमनुपपन्नं स्यात् । अत आह । 'सुप्सुपेति-सुप्सुपेत्यनेनैव सिद्धे समासे 'अव्ययम्' इत्यादिसूत्रैः पुनः समासविधानं प्राचीनस्य सुप्सुपेत्यस्य वैकल्पिकत्वं ज्ञापयति ।

ननु विभाषेत्यधिकारादेव सिद्धे वाग्रहणं किमर्थमिति चेत् अत्राह—पक्षे षष्ठीतत्पुरुष इति। वाग्रहणाभावेऽयमव्ययीभावसमासे विशेषविहितत्वात् षष्ठीसमासं बाधेत। तद्बाधनार्थं वाग्रहणम्। अत एव गङ्गापारादित्यपि रूपं साधु। नचाव्ययीभावसमासस्य षष्ठीसमासापवादत्वेऽपि तस्य महाविभाषया वैकल्पिकत्वात् तदभावपक्षे उत्सर्गः षष्ठीतत्पुरुषः प्रवर्तत एव। तस्यापि षष्ठीसमासस्य विभाषाधिकारस्थत्वेन वैकल्पिकत्वात् तदभावपक्षे वाक्यमपि सिध्यत्येव। तस्मादिह सूत्रे वाग्रहणं व्यर्थमेवेति चेन्न। "यत्रोत्सर्गापवादौ महाविभाषया विकल्पितौ तत्रापवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते" इति ज्ञापनार्थं तस्यावश्यकत्वात्। तेन पूर्वं कायस्येत्यत्र एकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति। दक्षस्यापत्यं दाक्षिरित्यत्र अत इञामुक्ते 'तस्यापत्यम्' इत्यण् न भवति किन्तूभयत्र वाक्यमेव।

प्र० ३।

आसन्नविंशाः, मुष्टीमुष्टिः, छत्रोपानहम्, कल्याणधर्मा, कुड्मलाग्रदन्, एषु कानि समासविधायकानि समासान्ताश्च के इति सुष्ठु निरूपयत।

उ०—विंशतेरासन्ना इत्यर्थे 'संख्ययाऽव्ययासन्ना' इत्यनेन बहुव्रीहौ समासे बहुव्रीहौ संख्येये डजबहुगणात्' इति डचि आसन्नविंशति अ इति स्थिते 'ति विंशतेर्डिति' इति तिलोपे 'अतो गुणे' इति पररूपे आसन्नविंशशब्दोऽदन्तस्माज्जसि आसन्नविंशाः। अत्र तिलोपोत्तरं टिलोपो न भवति तिलोपस्याभीयत्वेनासिद्धत्वात्।

मुष्टीमुष्टि—मुष्टिभिर्मुष्टिभिः प्रहृत्येदं युद्धं प्रवृत्तमिति विग्रहे तत्र तेनेदमिति सरूपे' इति समासे सुपोलुकि पूर्वपदस्य 'अन्येषामपि दृश्यते' इति दीर्घे इच् कर्मव्यतिहारे' इति समासान्ते इचियस्येति चेति लोपे मुष्टीमुष्टि इति निष्पन्नम्।

छात्रोपानहम्—छत्रञ्चोपानहच्चेति विग्रहे द्वन्द्वसमासे 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टचि छत्रोपानहम्।

कल्याणधर्मा—कल्याणो धर्मो यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे 'धर्मादनिच् केवलात्' इति सामासान्ते अनिचि यस्येतिचेत्यकारलोपे कल्याणधर्मेति सिद्धम्।

कुड्मलाग्रदन्—कुड्मलानां (मुकुलानाम्) अग्राणितानीवदन्ता। यस्येति विग्रहे बहुव्रीहौ समासे 'अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च' इति दन्तशब्दस्य दतृ आदेशे कुड्मलाग्रदन् इति।

प्र० ४ ।

पाण्डुभूमः, अराजा परस्मैभाषा, होतुः पुत्रः, अन्यदाशा, श्वादन्ता, बृहस्पतिः, एतेषां सिद्धिप्रकारः प्रदर्शनीयः ।

उ०—पाण्डुः भूमिर्यस्येतिविग्रहे बहुव्रीहौसमासे कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते' इत्यचि 'यस्येति च' इतीकारलोपे पाण्डुभूमः—इति सिद्धम् ।

अराजा—न राजेति विग्रहे नञ्तत्पुरुषे राजाहः सखिभ्यष्टच्' इति प्राप्तस्य टचः 'नञस्तत्पुरुषात्' इति निषेधे अराजेति रूपम् ।

परस्मैभाषा—परस्मैभाषेत्यत्र तादर्थ्यचतुर्थ्याः 'चतुर्थी' इति योगविभागात्समासे परस्य च' इति चतुर्थ्या अलुकि परस्मैभाषेति रूपम् ।

होतुः पुत्रः—होतुः पुत्र इति विग्रहे षष्ठीसमासे 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इति षष्ठ्या अलुकि होतुः पुत्र इति ।

अन्यदाशा—अन्याचासावाशाचेति कर्मधारयसमासे 'अषष्ठ्यतृतीयास्थस्यान्यस्य' इत्यादिना दुगागमे अन्यदाशेति रूपम् ।

श्वादन्तः—शुनोदन्त इति विग्रहे षष्ठीसमासे' शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः' इति श्वशब्दस्याकारस्य दीर्घे श्वादन्त इति रूपम् ।

प्र० ५ ।

भाद्रमातुरः, भ्रौवेयः, कामण्डलेयः आढ्यकुलीनः, नैषध्यः, पृष्ठ्यम्, वासन्तिकः मधुमान् एषु के तद्धितप्रत्ययाः, तदर्थाश्च के तद्विधायकानि च कानि ।

उ०भाद्रमातुरः—अत्रापत्यार्थे मातुरुत्संख्यासंभद्रपूर्वायाः, इत्यण् प्रत्ययः।

भ्रौवेयः—अत्रापत्यार्थे भ्रुवो वुक्चेति ढक्प्रत्ययः ।

कामण्डलेयः—अत्रापत्यार्थे 'चतुष्पाद्भ्यो ढञ्' इति ढञ् ।

आढ्यकुलीनः—अत्रापत्यार्थे 'कुलात्खः' इति खः ।

नैषध्यः—अत्र निषधानामपत्यं राजावेति अपत्यार्थे राजनि वा वाच्ये 'कुरुनादिभ्योण्यः' इति ण्यः ।

पृष्ठ्यम्—अत्र समूहार्थे 'पृष्ठादुपसंख्यानम्' इति यत् प्रत्ययः ।

वासन्तिकः—वसन्तवर्णनपरोग्रन्थोवसन्तः तमधीते वेत्तिवेत्यर्थे 'वसन्तादिभ्यष्ठक्' इति ठक् प्रत्ययः ।

मधुमान्—इत्यत्र निवासार्थे 'मध्वादिभ्यश्च' इति चातुरर्थिको मतुप् ।

१६१८

प्र० १।

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णाविति सूत्रं व्याख्याय, येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मका नत्वविवक्षितकर्माणोऽपि इत्यत्र प्रमाणं दर्शय।

उ०—गतिश्च बुद्धिश्च प्रत्यवसानञ्चेति गति–प्रत्यवसानानि। प्रत्यवसानं भक्षणम्। गति नानि अर्थौ येषां ते गति-र्थाः, शब्दः कर्म येषान्ते शब्दकर्माणः। अविद्यमानं कर्म येषान्तेऽकर्मकाः। गतिबुद्धिप्रत्यवसानार्थाश्चशब्दकर्माणश्च अकर्मकाश्च ते गति कास्तेषां गतिबु–काणाम्। अणौ कर्ता अणिकर्ता। गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणाञ्चाणौ यः कर्ता स णौ कर्म स्यात्। इति सूत्रार्थः। णावनुत्पन्ने सति शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता सः ण्यन्तधातुवाच्यां प्रयोजकव्यापारात्मिकां क्रियां प्रति कर्मसंज्ञकः स्यात् इति फलितार्थः।

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत्। आशयच्चामृतं देवान् वेदमध्यापयद्विधिम्॥ इत्युदाहरणानि।

प्र० २।

पित्रा संजानीते, विप्राय गामाश्रृणोति, नत्वां तृणाय मन्ये, तिलेभ्यः प्रतियच्छति माषान्, राज्ञां मतः, हरावुत्सुकः। एषु तृतीयादीनां विशेषविधायकानि सूत्राणि दर्शय।

उ०—पित्रा सञ्जानीते अत्र 'संज्ञोऽन्यतरस्यामिति सूत्रेण पाक्षिको तृतीया।

विप्राय गामाश्रृणोतीत्यत्र 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इति विप्रस्य सम्प्रदानत्वे चतुर्थी।

नत्वां तृणायेत्यत्र 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति पाक्षिकी चतुर्थी।

तिलेभ्यः प्रतियच्छतीत्यत्र 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति प्रतेः कर्मसंज्ञायां 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी।

राज्ञां मतः—अत्र वर्तमानार्थक क्तप्रत्यययोगे 'क्तस्य च वर्तमाने' इति षष्ठी।

हरावुत्सुकः—अत्र 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तमी।

प्र० ३।

अनुवनम्, परोक्षम्, सर्वमहान्, कतरकठः, अमृताश्मः, षोढा, द्विदशाः,

संज्ञुः, यूकालिक्षम्, द्यावाभूमी, पञ्चनदम्। एतानि सुष्ठु साध्यानि।

उ०—अनुवनम्—वनस्य अनु, वनमनु इति वा विग्रहे अनुर्यत्समयेति अव्ययीभावसमासे 'सुपोधातु' इति सुपोलुकि 'प्रथमानिर्दिष्टम्' इति उपसर्जनसंज्ञायामनोः पूर्वनिपाते समासादुत्पन्नविभक्तेः 'नाव्ययीभावाद्तोऽम्त्वपञ्चम्याः' इत्यम्भावे अनुवनमिति सिद्धम्।

सर्वमहान्—सर्वेषां महत्तर विग्रहे 'द्विवचनविभज्योपपदे' इति विभक्तव्योपपदे तरपि तरवन्तेन सह सर्वशब्दस्य 'गुणात्तरेण' इति समास तरपोलोपे च सर्वमहान्।

कतरकठः—कतरश्चासौ कठ इति विग्रहे कठकलापयोः 'गोत्रञ्च चरणैः सह' इति जातित्वात् 'कतरकतमौ जातिपरिप्रश्ने' इति समासे प्रथमानिर्दिष्टमिति कतरकतमशब्दयोरुपसर्जनत्वेन पूर्वनिपाते समासात्पुनः सौ कतरकठः।

अमृताश्मः—अमृतः अश्मेति विग्रहे विशेषणसमासे 'अनोऽश्मायः सरसां जातिसंज्ञयोः' इति टचि 'नस्तद्धिते' इति टिलोपे अमृताश्म इति सिद्धम्।

षोढा—षष्शब्दात् 'संख्याया विधार्थे धा' इति धाप्रत्यये 'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वञ्च धासुवेति वाच्यम्' इति वार्तिकेन अन्त्यषकारस्योत्वे अकारोकारयोर्गुणे ष्टुत्वेन धस्य ढकारे षोढेति रूपम्।

द्विदशाः—द्विरावृत्ता दश इति विग्रहे सुजर्थे 'संख्ययाव्ययासन्ना' इत्यादिना बहुव्रीहौ 'बहुव्रीहौ संख्येय' इति डच्प्रत्यये डित्वाट्टिलोपे द्विदशा इति सिद्धम्। अत्र शब्दशक्तिस्वाभाव्यात् सुजर्थान्तर्भावेन पूर्वपदस्य वृत्त्याश्रयणात् समासे सुचो न श्रवणम्।

संज्ञुः—सङ्गते जानुनी यस्येति विग्रहे बहुव्रीहौ समासे 'प्रसम्भ्यां जानुनो र्ज्ञुः' इति जानु शब्दस्य ज्ञुरादेशे संज्ञुरिति रूपम्।

यूकालिक्षम्—यूकाश्च लिक्षाश्चेति विग्रहे द्वन्द्वसमासे सुपोलुकि 'क्षुद्रजन्तवः' इति समासस्य एकत्वे 'स नपुंसकम्' इति नपुंसकत्वे नपुंसकह्रस्वत्वे च यूकालिक्षमिति रूपम्।

द्यावाभूमी—द्यौश्च भूमिश्चेति विग्रहे इतरेतरयोग द्वन्द्वसमासे 'दिवोद्यावा' इति दिवो द्यावादेशे समासादौकारविभक्तौ द्यावाभूमी इति रूपम्।

पञ्चनदम्—पञ्चानां नदीनां समहार इति विग्रहे नदीभिश्चेति समासे सुपो-

द्यातु इति सुपोलुकि 'संख्याया नदीगोदावरीभ्याञ्च' इत्यच्प्रत्यये यस्येति चेती-कारलोपे समासात्पुनरुत्पन्नविभक्तेरव्ययीभावत्वादम्भावे पञ्चनदम् ।

प्र० ४ ।

पद्गः, पन्निष्कः, अग्निमिन्धः, सर्वान्धः, कोटरावणम् , हरिकामिणौ, अजस्तु-न्दम् । एतान्यपि तथा ( एतान्यपि साधयत )

उ०—पद्गः—पादाभ्यां गच्छतीत्यर्थे 'अन्येभ्योऽपि दृश्यते' इति वार्तिकेन गम्धातोः डप्रत्यये तदन्ते गशब्दे परे पादशब्दस्य 'पादस्य पदाज्यातिगोपहतेषु' इति अदन्ते पदादेशे पद्ग इति साधु ।

पन्निष्कः—अत्र 'निष्केचेति वक्तव्यम्' इति वार्तिकेन पादशब्दस्य पदादेशे पन्निष्क इति रूपम् ।

कोटरावणम्—कोटरस्य वनमिति विग्रहे षष्ठीसमासे 'वनगिर्योः संज्ञायां कोटरकिंशुलकादीना'मिति कोटरशब्दस्यान्त्यदीर्घे 'वनं पुरगे'त्यादिना णत्वे च कोट-रावणमिति सिद्धम् ।

हरिकामिणौ—हरिं कामयते इति विग्रहे 'बहुलमाभीक्ष्ण्ये' इति णिनिः तद-न्तादौकारविभक्तौ प्रातिपदिकान्तत्वात् 'कुमति च' इति नित्यं णत्वे हरिकामिणौ इति सिद्धम् ।

अजस्तुन्दम्—अजस्येव तुन्दमस्येति विग्रहे तुन्दशब्दस्य सुटि अजस्तुन्द-मिति रूपम् । नगरविशेषस्य संज्ञेयम् ।

प्र० ५ ।

तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् । उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥ इति व्याख्यायताम् ।

उ०—इदमर्थेऽपत्यसमूहविकारादीनामन्तर्भावादपत्येऽपि 'तस्येदम्' इत्यण् प्रवर्तते इति किमनेन तस्यापत्यमिति सूत्रेणेत्यर्थः । यद्यपि 'अत इञ्' इत्याद्यर्थं तस्यापत्यमिति वक्तव्यम् । तथापि योगविभागः किमर्थं इत्याक्षेप्तुराशयः । समाधत्ते—'तस्येदम्' इत्यस्य यद्बाधकं 'वृद्धाच्छः' इति तद्बाधनार्थं पृथक्सूत्रं कृतं भवेदित्यर्थः । ननु तस्येदमित्यणस्तदपवादस्य वृद्धाच्छस्य च शैषिकत्वादप-त्यार्थे प्रसक्तिरेव नास्ति अपत्यादिचतुरर्थपर्यन्तेभ्यो योऽन्योऽर्थः स शेष इत्यभ्युप-गमात् अत आह "उत्सर्गः शेष एवासौ" असौ अपत्यार्थः । असति योगविभागे

अदन्तवाह्वादिप्रकृतिसम्बद्धस्यैवापत्यार्थस्योपयोगादुपगवादि प्रकृतिसम्बद्धोऽपत्यार्थः शेष एव स्यात्। तथाचाणं बाधित्वा भान्वादिभ्यो वृद्धाच्छः प्रसज्येत। योगविभागे तु कृते प्रकृतिसामान्यसम्बद्धस्यापत्यार्थस्योपयोगाच्छेशत्वाभावेन छस्य प्राप्तिरेव नास्ति। एवञ्च अप्राप्तिसम्पादनद्वारा छबाधकत्वम् 'तस्यापत्यम्' इति पृथक्सूत्रस्य सिद्धम्। ननु उपगवादेरवृद्धत्वेन छस्य प्रवृत्त्यभावान्निष्फलो योगविभागः स्यादत आह—

वृद्धानीति—भान्वादिप्रातिपदिकानि वृद्धान्यस्य प्रयोजनम्।

प्र० ६।

वाभ्रव्यः, बौध्यः भ्रातृव्यः, ताक्ष्ण्यः, पाण्ड्याः, आम्बष्ठ्या, इक्षुमती, अश्मरः, आजकौणः, रथकव्या, आयम्, उख्यम्, वैयाघ्रः एषु प्रत्ययतदर्थतद्विधायकानि दर्शय।

उ०—वाभ्रव्यः—अत्र कौशिके गोत्रे वाच्ये 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इति यञ्प्रत्ययः।

वौध्यः—इत्यत्र आङ्गिरसे गोत्रे वाच्ये 'कपिबोधादाङ्गिरसे' इति यञ् प्रत्ययः।

भ्रातृव्यः—अत्र अपत्यार्थे 'भ्रातुर्व्यच्च' इति व्यत्प्रत्ययः। शत्रौ च वाच्ये 'व्यन्त्सपत्ने' इति व्यन् प्रत्ययः। स्वरेभेदः।

ताक्ष्ण्यः—अत्र उदीचामते तक्षन्शब्दात् 'तक्ष्णोऽण उपसंख्यानम्' इत्यणो विधानात् प्राचां गोत्रे 'सेनान्तलक्षणकारिभ्यश्च इति ण्यप्रत्ययः।

पाण्ड्याः—अत्र आपत्ये राजनि च वाच्ये 'पाण्डोर्ड्यण् इति ड्यण् प्रत्ययः।

आम्बष्ठ्या—अत्र अपत्ये राजनि च वाच्ये 'वृद्धेत्कोसलाजादाञ्ञ्यङ् इति ञ्यङ्प्रत्ययः।

इक्षुमती—इत्यत्र निवासादिचतुरर्थेषु 'नद्यांमतुप्' इति मतुप्।

अश्मरः—अत्र चतुर्थेषु 'वुञ्छण्' इत्यादिना रप्रत्ययः।

रथकव्या—अत्र समूहार्थे 'इनित्रकव्यचश्च इति कव्यच्प्रत्ययः।

आयम्—श्रीर्देवता अस्येति देवतार्थे 'सास्य देवता' इत्यण् प्रत्ययः।

१८१८

प्र० १।

कर्तुः किम्। मापेष्वश्वं बध्नाति इति ग्रन्थमुपपाद्यादयत्यन्नं बटुना, पापे

ऽभिनिवेशः, अपि स्तुहि, सुखेन याति कृष्णायेक्षते अत्रत्यानि विशेषकार्याणि, प्रदर्श्य मन्यकर्मण्यनादरे इत्यत्र श्यनानिर्देशे मानञ्चोपपादय ।

उ०—सनर्थेच्छायाः कर्त्तृनिष्ठत्वेन कारकाधिकारेण वा कर्त्तृलाभसम्भवेन कर्त्तृपदं व्यर्थमिति प्रष्टुराशयः । उत्तरदित्सोरयमाशयः—माषेष्वश्वं बध्नातीति प्रयोगे माषाणां कर्मत्वाभावाय कर्त्तृपदम् । कर्त्तृग्रहणाभावे हि बध्नातिक्रियायाः कर्मणा अश्वेनापि माषाणामीप्सिततमत्वात्तेषां कर्मत्वं स्यात् सति तु तस्मिन् बन्धनकर्त्तुर्माषाणामनीप्सितत्वाद् तेषां न कर्मत्वमिति ।

आदयत्यन्नम्—अत्यन्नं बटुस्तं प्रेरयति इत्यर्थे अद्धातोः प्रत्यवसानार्थकत्वेन 'गतिबुद्धि' इत्यादिना प्राप्तस्य प्रयोज्यकर्त्तुर्बटोः कर्मत्वस्य 'आदिखाद्योर्न' इति वार्तिकेन निषेधे अनुक्ते कर्तरि तृतीया ।

पापेऽभिनिवेशः—अत्र 'अभिनिविशश्च' इतिसूत्रेण विशतेराधारस्य कर्मत्वं प्राप्तं तस्य च, अत्रसूत्रे 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' इति सूत्रादन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थित विभाषाश्रयणाच्च निषेधः । ततः क्वचिदस्य सूत्रस्याप्रवृत्त्या आधारे सप्तम्येव ।

अपिस्तुहि—अत्रान्ववसर्गे 'अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु' इति सूत्रेणापेः कर्मप्रवचनीयत्वेनोपसर्गसंज्ञाबाधात् 'उपसर्गात् सुनोति' इत्यादिना षत्वंन ।

सुखेन याति—अत्र सुखस्य क्रियाविशेषणत्वात् ( सुखं सुखपूर्वकं याति ) द्वितीयायां प्राप्तायां 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया ।

कृष्णायेक्षते—पृष्टो गर्गः कृष्णस्य शुभाशुभं पर्यालोचयतीत्यर्थः । अत्र 'राधीक्ष्योर्यस्य विप्रश्नः' इति कृष्णस्य सम्प्रदानत्वे चतुर्थी । सा च षष्ठ्यापवादभूता ।

मन्यकर्म०-इति—ननु मन्य इति श्यनानिर्देश एव कथं स्वीक्रियते यकैवनिर्देशः कथं न स्वीक्रियते इति चेन्न । अनभिहित इत्यधिकारात् नहि यकायोगेऽनभिहितं कर्म सम्भवति । यकः कर्मणि विधानात् कर्मणोऽभिहितत्वात् । किञ्च यकानिर्देशेप्रयोजनाभावात् मनिकर्मणीति लघुन्यासेन निर्दिशेदाचार्यः । श्यनानिर्देशेतु प्रयोजनस्य सत्वान्न तथा निर्देशः ।

प्र० २ ।

ब्राह्मणं दीव्यति, सत्सु तिष्ठत्सु असन्तस्तरन्ति इत्यत्र विशेषविभक्तिविधाय-

कानि सूत्राणि प्रदर्श्यं राज्ञां मत इत्यत्र पष्ठीकेन कथं च तत्र क्तस्य वर्तमाने साधुत्वमित्युपपादय ।

उ०—ब्राह्मणं दीव्यतीत्यत्र दिव्धातोः स्तुत्यर्थकतया द्यूतार्थत्वाभावात 'दिवस्तदर्थस्य' इत्यस्याप्रवृत्त्या कर्मणि द्वितीया । ब्राह्मणं स्तौतीत्यर्थः ।

सत्सु तिष्ठत्सु इति—अत्र 'अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च' इति वार्तिकेन अर्हाणामकर्तृत्वे सत्सु इत्यत्र सप्तमी । सतां हि तरणमुचितं तेषामकर्तृत्वं तिष्ठत्सु इत्यनेन द्योत्यते ।

राज्ञां मतः--अत्र क्तस्य च वर्तमाने' इति षष्ठी । 'मतिबुद्धिपूजार्थेभ्यश्च' इति सूत्रेण च क्तस्य वर्तमाने विधानात् तस्य वर्तमाने साधुत्वम् ।

प्र० ३ ।

प्रत्यर्थम्, सर्वश्वेतः तक्षकस्य सर्पस्य, अत्रत्यफक्किामुपपाद्य तीर्थकाकः, गोगर्भिणी, कुम्भकार,ः क्ष्यहा, घर्मसभा श्वनिशम्, एषां साधुत्वप्रकारं प्रदर्शय ।

तक्षकस्य सर्पस्य--अत्र तक्षकस्येति पष्ठ्यन्तस्य सर्पस्येति समानाधिकरणेन सह 'पूरणगुण, इत्यत्र समानाधिकरणेन समासनिषेधात्समासो न भवति । ननु षष्ठीसमासस्य निषेधेऽपि 'विशेषणं विशेष्येण बहुलम्' इति विशेषणसमासो दुर्वार इति चेन्न तत्र बहुलग्रहणाद् विशेषणसमासाप्रवृत्तेः । गोर्धेनोरित्यादिषु षष्ठीसमासः प्राप्तः । सोऽप्यनेन समानाधिकरणग्रहणेन वार्यते । ननु पष्ठीसमास एवात्र न प्रसज्यते 'पोटायुवति' इत्यादिविशेषविहितकर्मधारयेणात्र परस्यापि षष्ठीसमासस्य बाधितत्वादिति चेन्न । पोटायुवतीत्यादिविधया गौर्धेनुरित्यादिषु प्रथमाविभक्त्यन्तेषु सावकाशः षष्ठीसमासः, राज्ञः पुरुषइत्यादावसमानाधिकरणे सावकाशः । गोर्धेनोरित्यादिषूभयं प्राप्तम् । तत्र पोटायुवतीत्यादिविधीन् बाधित्वा प्राप्तः षष्ठीसमासः समानाधिकरणग्रहणाद् निषिध्यते ।

गोगर्भिणी--गर्भिणी चासौ गौरिति विग्रहे 'चतुष्पादोगर्भिण्या' इति कर्मधारयसमासे सुपोलुकि प्रथमानिर्दिष्टमिति गोशब्दस्योपसर्जनत्वेन पूर्वनिपाते गोगर्भिणीति सिद्धम् ।

कुम्भकारः—कुम्भं करोतीति विग्रहे 'कर्मण्यण्' इत्यण्प्रत्यये कारशब्दः; तद्योगे कर्तृकर्मणोः कृति' इति षष्ठ्यां कुम्भ अस् कार इत्यलौकिकप्रक्रियावाक्ये 'उपपदमतिङिति' सूत्रेण समासे सुपोलुकि प्रथमानिर्दिष्टमिति कुम्भशब्दस्योपसर्ज-

न्त्वेन पूर्वनिपाते समासात्पुनः सौ तस्य रुत्वविसर्गयोः कुम्भकार इति निष्पन्नम् ।

श्वनिशम्—शुनो निशेति विग्रहे षष्ठीसमासे सुपोलुकि अन्तर्वर्तिनो विभक्तिमाश्रित्य न लोपे 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति समासस्य क्लीबत्वेन 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे श्वनिशमिति रूपम् ।

प्र० ४ ।

आग्नेयः, उपदशाः, पुष्यनेत्राः, उभयाहस्ति, विवृतासिः, कठकलापम्, शीतोष्णे उदके स्तः, गोष्ठश्वः, श्वादन्तः, प्रायश्चित्तम् एतानि रूपाणि साधयत ।

उपदशाः—दशानां समीपे ये सन्तीतिविग्रहे समीपवर्तिनि विद्यमानस्य उपशब्दस्य दशशब्देन सह 'संख्ययाऽव्ययासन्ना' इत्यादिना समासे प्रथमानिर्दिष्टमिति उपशब्दस्योपसर्जनत्वेन पूर्वनिपाते उपदशन्शब्दात् 'बहुव्रीहौ संख्येये' इति डचि 'नस्तद्धिते' इति टिलोपे ततो जसि उपदशा इति रूपम् ।

पुष्यनेत्राः—पुष्यो नेता यासां ताः इति विग्रहे बहुव्रीहौ समासे पुष्यनेतृशब्दात् 'नेतुर्नक्षत्रेऽब्वक्तव्यः' इत्यपि ऋकारस्य यणादेशे टापि जसि पुष्यनेत्राः-इति सिद्धम् ।

उभयाहस्ति—उभौ हस्तौ यस्मिन्प्रहरणे इति विग्रहे बहुव्रीहौ समासे द्विदण्डयादिभ्यश्चेति सूत्रे समुदायनिपातनात् इच्प्रत्यये उभशब्दस्योभयादेशे कर्मव्यतिहाराभावेऽपि दीर्घे च उभयाहस्ति इति सिद्धम् ।

विवृतासिः—विवृतः ( कोशान्निष्काशितः ) असिर्येनेति विग्रहे बहुव्रीहौ समासे 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति वार्तिकेन विवृतशब्दस्य पूर्वनिपाते प्राप्ते आहिताग्न्यादित्वादनभिधानाद्वा तदभावे विवृतासिरित्येतत्सिध्यति ।

कठकलापम—कठेन प्रोक्तमधीयत इति कठाः । वैशम्पायनान्तेवासित्वाण्णिनिः तस्य 'कठचरकाल्लुक्' इति लुक् । ततोऽध्येतृप्रत्ययस्य 'प्रोक्ताल्लुक्' इति लुक् । कलापिना प्रोक्तमधीयते इति कलापाः । प्रोक्तार्थे 'कलापिनोऽण्' इत्यण् 'सब्रह्मचारिपीठसर्पि' इत्यादिना टिलोपः । ततोऽध्येत्रणः 'प्रोक्ताल्लुक्' इति लुक् । कठानां कलापानाञ्च समाहार इति विग्रहे द्वन्द्व समासे 'अनुवादे चरणानाम्' इति द्वन्द्वैकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे च कठकलापमितिरूपम् ।

प्र० ५

तत्र भवान् गार्ग्यायणः, जैवन्तिः, बाभ्रव्यायणी, बौध्यः, काणेरः, आष्टूकि-

कापिष्ठलयः 'सामनः, भोज्या, दैवयज्ञी, एषुकेविशेषप्रत्ययास्तदर्थांश्च के विधायकानि च कानि इति साधूपपादय ।

उ०—तत्रभवान्गार्ग्यायणः—अत्र पूजायां द्योत्यायां गोत्रे विवक्षिते 'वृद्धस्य च पूजायाम्' इति गोत्रस्यैव युवसंज्ञायां 'यञिञोश्च' इति फक् प्रत्ययः ।।

जवन्तिः—अत्र गोत्रे विवक्षिते 'द्रोणपर्वतजीवन्तादन्यतरस्याम्' इति फकः पाक्षिकत्वेन तदभावे 'अत इञ्' इतीञ्प्रत्ययः ।

वाभ्रव्यायणी—बभ्रुशब्दाद् गोत्रापत्ये गर्गादि यञि वाभ्रव्यशब्दात 'सर्वत्र लोहितादिकतन्तेभ्यः' इति ष्फः ।

काणेरः—काणशब्दादपत्यार्थे 'क्षुद्राभ्यो वा' इति ढ्रक् प्रत्ययः ।

श्राग्रकिकापिष्ठलयः—गोत्रे 'अत इञ्' इति इञ् तस्य 'उपकादिभ्योऽन्यतरस्यामद्वन्द्वे' इति पाक्षिकोलुक् । लुगभावे चेदंरूपम् ।

भोज्या—भोजस्यापत्यं स्त्रीत्यर्थे क्षत्रियवाचकाद्भोजशब्दात् 'क्रौड्यादिभ्यश्चेति'ष्यङ्प्रत्यये टापि च भोज्येति रूपम् ।

सन् १९२०

प्र० १ ।

वने उपवसति, नदीमन्ववसिता सेना, क्रोशं कुटिला नदी, पित्रा संजानीते, पुष्पेभ्यः स्पृहयति, शताय परिक्रीतः, आमुक्तेः संसारः, शतस्य दीव्यति, एषु विशेषविभक्तिविधायकानि प्रदर्श्य सप्तमीपञ्चम्यौ कारकमध्ये इति सूत्रं सोदाहरणं व्याख्यायताम् ।

उ०—वने उपवसति—'उपान्वध्याङ्वसः' इति सूत्रेण प्राप्तस्य वसेराधारस्य कर्मत्वस्य 'अभुक्त्यर्थस्य न' इति वार्तिकेन प्रतिषेधात् आधारसप्तम्येव ।

नदीमन्वसितेति—'तृतीयार्थे' इति सूत्रेणानोः कर्मप्रवचनीयत्वे तद्योगे नदीमित्यत्र 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया ।

क्रोशं कुटिलेत्यत्र—'कालाध्वनोरत्यन्तसंयोगे' इति सूत्रेणाध्वन्यत्यन्तसंयोगे द्वितीया ।

शताय परिक्रीतः—'परिक्रयणे सम्प्रदानमन्यतरस्याम्' इति सूत्रेण सुवर्णादियत्किञ्चिद्द्रव्यशतस्य परिक्रयणे साधकतमस्य सम्प्रदानत्वे चतुर्थी ।

आमुक्तेरिति—'आङ्मर्यादावचने' इत्याङः कर्मप्रवचनीयत्वे तद्योगे 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी ।

शतस्य दीव्यती—अत्र दिवस्तदर्थस्येति कर्मणि षष्ठी ।

सप्तमीपञ्चम्यावति । अत्र कारकशब्दः कर्तृत्वादिशक्तिपरः न तु कर्त्रादिपरः । कारकयोर्मध्ये कारकमध्यं तस्मिन् कारकमध्ये । शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः इति सूत्रार्थः । अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता । यद्यप्यत्र कर्ता एक एव तथापि कर्तृपदेन कर्तृशक्तिर्गृह्यते तस्याश्च कालभेदेन भिन्नत्वात् कारकमध्यत्वं निर्बाधमतएव चात्र सूत्रे कारकपदेन शक्तेर्ग्रहणमिति । इहस्थोयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृत्वकर्मत्वरूपशक्त्योर्मध्येऽयं देशः अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते तदस्मिन्नधिकमिति, यस्मादधिकमिति च सूत्रनिर्देशात् लोके लोकाद्वा अधिको हरिः ।

प्र० २ ।

अधिगोपम्, परोक्षम्, उपसमिधम्, चक्रबन्धः, एकनाथः, राजान्तरम्, पदेकृत्य, एतान् साधयत ।

उ०—अधिगोपम्—गोपायतीति विग्रहे गुपू धातोः विच । 'आयादयः आर्धधातुके वा' इत्याय् प्रत्ययः । 'लोपो व्योः' इति यलोपः 'वेरपृक्तस्य' इति वकारलोपः । तदेवं गोपाशब्दः आकारान्तः गाः पातीति विग्रहे पातेर्विचि उपपदसमासे च गोपाशब्दः । गोपि इति सप्तम्यर्थे 'अव्ययं विभक्ति' इत्यादिना विभक्त्यर्थे समासे सुब्लुकि 'अव्ययीभावश्च' इति समासस्य नपुंसकत्वे 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे समासादुत्पन्नस्य सोः 'नाव्ययीभावात्' इत्यमि 'अमिपूर्वः' इति पूर्वरूपे अधिगोपम् ।

प्र० ३ ।

आग्नेयः, सर्वमयः, विश्वदेवः, शीतोष्णे उदके स्तः, राजवर्चसम्, एषु विशेष कार्याणि निर्दिश्य धर्मादनिच्केवलात् इत्यत्रानिचासिद्धेऽकारकरणस्य प्रयोजनमुपपादय ।

धर्मादनिजिति—अत्राकारकरणं चिन्त्यप्रयोजनमित्येके । अन्ये तु धर्मं करोत्याचष्टे वा 'तत्करोति' इति ण्यन्तात् क्विपि धर्मशब्दः, परमो धर्मं यस्य स परमधर्मा । एकदेशविकृतस्यान्यत्वाद्धर्मशब्दोऽयमित्यकारोच्चारणं सप्रयोजनमित्याहुः । ( त० बो० )

प्र० ४ ।

क्षीरोदः, रेवतीपुत्रः, अग्निमिन्धः, सद्रोणा, सदृक्षः, दूडभः, कपीनहम्, एतान्यपि साधय ।

उ०--क्षीरमुदकम् ( उदकस्थानीयम् ) यस्येति विग्रहे बहुव्रीहौ समासे उदकस्योदः संज्ञायामिति सूत्रघटेन 'उत्तरपदस्य चेति वक्तव्यम्' इति वार्तिकेन उदकशब्दस्योदादेशे क्षीरोद इति ।

रेवतिपुत्रः--रेवत्याः पुत्र इति विग्रहे समासे 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वे रेवतिपुत्रः । कस्यचित्संज्ञेयम् ।

सद्रोणा--द्रोणपरिमाणादधिकेत्यर्थः । अत्राधिकवाचिनः सहशब्दस्य द्रोणशब्देन सह मयूरव्यंसकादित्वात्समासे 'ग्रन्थान्ताधिके च' इति सहस्य सभावे स्त्रियां टापि सद्रोणेति रूपम् ।

सदृक्षः--समानो दृश्यत इत्यर्थे दृशेः 'क्सो सुपि वाच्यः' इति क्स प्रत्ययः 'दृक्षे च' इति वार्तिकेन समानस्य सत्वे च सदृक्षः इति सिद्धम् ।

दूडभः--दु:खेन दभ्यत इत्यर्थे दम्भेः कर्मणि 'खल्' दुरोदाशनाशदभध्येषु इत्यत्र दभेः कृतानुनासिकलोपस्योच्चारणात् अनुनासिकलोपे दुर्शब्दस्य दभशब्देन सह प्रादिसमासे दुर दभ इति स्थिते रेफस्योत्वे सवर्णदीर्घे दभेर्दकारस्य ष्टुत्वेन डकारे दूडभः--इति ।

प्र० ५ ।

दात्तेयः, दासेयः, गार्ग्यः, आढ्यकुलीनः, दैवयज्ञ्या, उख्यम्, शुनासीर्यम्, गाणिक्यम् एते कथं सिध्यन्ति ।

उ०--दात्तेयः--दत्ताया अपत्यमिति विग्रहे दत्ताशब्दात् 'द्व्यचः' इति ढकि ढस्य एयादेशे यस्येतिचेत्याकारलोपे दात्तेयः ।

दासेयः--दास्या अपत्यमिति विग्रहे दासीशब्दात् 'क्षुद्राभ्यो वा' इति ढकि ढस्य एयादेशे यस्येतिचेतीकारलोपे दासेयः ।

सन् १९२१

प्र० १ ।

ग्रामं समया, अतिदेवान् कृष्णः अक्ष्णा काणः, अध्ययनेन वसति, भक्ताय

धारयति मोक्षं हरिः, कृष्णाय ईक्षते, यागाय याति, परिहरेः संसारः, सर्पिषो नाथनम्, एषु कारकप्रकरणकार्याणि प्रदर्शय ।

उ०-ग्रामं समयेत्यत्र--समया योगे 'अभितः परितः समयानिकषाहाप्रतियोगेऽपि' इति वार्तिकेन द्वितीया ।

अतिदेवान् कृष्णः--अत्र 'अतिरतिक्रमणे च' इत्यनेनातिक्रमणार्थे (उचितादाधिक्ये) अतेः कर्मप्रवचनीयसंज्ञायाम् 'कर्मप्रवचनीययुक्ते द्वितीया । इति द्वितीया

अध्ययनेनवसति-हेताविति सूत्रे फलस्यापि हेतुत्वेन ग्रहणात अध्ययनेनेत्यत्र तृतीया ।

भक्ताय धारयति-अत्र भक्तस्य ऋणदातृत्वेनोत्तमर्णत्वात् 'धारेरुत्तमर्णः' इति सम्प्रदानत्वे चतुर्थी ।

यागाय याति-अत्र यष्टुं यातीति तुमर्थे घञ्प्रत्ययान्तात् यागशब्दात 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ।

सर्पिषो नाथनम्-अत्र 'आशिषि नाथः' इति शेषत्वेन विवक्षिते कर्मणि षष्ठी ।

प्र० २ ।

शाकप्रति, बहिर्वनम्, द्वियमुनम्, धान्यार्थः, सर्वमहान् , दन्तलेखकः, पूर्वाह्णकृतम्, कृताकृतम् , गोगर्भिणी, कुपुरुषः, ईषद्रक्तम्, एषु कानि समाससंज्ञाविधायकानि ।

उ०-शाकप्रति-शाकस्य लेश इत्यर्थे मात्रार्थकेन प्रतिना शाकस्येति सुबन्तस्य 'सुप् प्रतिना मात्रार्थे' इति समासे सुपोधातु' इति सुपोलुकि समासविधौ सुबन्तस्य प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात्पूर्वनिपाते शाकप्रति इत्यव्ययीभावसमासस्याव्ययत्वात्तत उत्पन्नस्य सुपः 'अव्ययादाप्सुपः' इति लुकि शाक प्रति इति सिध्यति ।

बहिर्वनम्—अत्र अपपरिबहिरञ्चवः पञ्चम्या· इत्यव्ययीभावसमासः अदन्तत्वात् 'नाव्ययीभावादिति' अम्भावः ।

द्वियमुनम्—द्वयोर्यमुनयोः समाहार इति विग्रहे 'नदीभिश्च' इत्यव्ययीभावसमासः । गोस्त्रियोरिति ह्रस्वः । अदन्तत्वादम्भावः ।

धान्यार्थः—धान्येनार्थः ( अर्थशब्दो धनपरः । हेतौ तृतीया । धान्यहेतुकं धनमित्यर्थः ) इति विग्रहे धान्येनेति तृतीयान्तस्यार्थशब्देन सह 'तृतीया तत्कृतार्थेगुणवचनेन' इति तत्पुरुषः समासः ।

दन्तलेखः—दन्तानां लेखनेन जीवतीत्यस्वपदविग्रहे ( अत्र जीविकासमासगम्या ) 'नित्यं क्रीडाजीविकयोः' इति सूत्रेण जीविकायाम्, 'तृजकाभ्यां कर्तरि' इति षष्ठीसमासनिषेधं बाधित्वा तत्पुरुषः समासः ।

पूर्वाह्णकृतम्—पूर्वाह्णे कृतमिति विग्रहे 'क्तेनाहोरात्रावयवाः' इति सूत्रेण सप्तम्यन्तस्य कृतमिति क्तान्तेन सह तत्पुरुषः समासः ।

कृताकृतम्—कृतञ्च तदकृतञ्चे ( एकदेशस्य करणात्कृतम्, एकदेशान्तरस्याकरणात्तदेवा कृतम् ) तिविग्रहे क्तेन नञ्विशिष्टेनानञ्' इति कृताकृतशब्दयोः समासः ।

कुपुरुषः—कुत्सितः पुरुष इति विग्रहे 'कुगतिप्रादयः' इति समासः ।

ईषद्रक्तम्—अत्र ईषदकृतेत्यत्राकृतेत्यपहाय 'ईषद्गुणवचनेनेति वाच्यम्' इति वार्तिकबलात् गुणवचनेनाक्तदन्तेनापीषच्छब्देन सह समासः ।

प्र० ३ ।

जरच्चित्रगुः उपदशाः, बाहूबाहवि, सलोमकः पुष्यनेत्राः, खरणसः, चतुरश्रः सोमजम्भा, सुगन्धिः ।

सलोमकः—लोमभिः सहेति विग्रहे तेन सहेति तुल्ययोगे' इति सूत्रे तुल्ययोगवचनस्य प्रायिकत्वात् तुल्ययोगाभावेऽपि तेन समासे सुपोलुकि 'वोपसर्जनस्य' इति सहस्य सभावे कपि च सलोमक इति सिद्धम् ।

खरणसः—खर इव नासिका यस्येतिविग्रहे बहुव्रीहौ समासे सुपोलुकि 'अङ्नासिकायाः संज्ञायां नसं चास्थूलात्' इति अच्प्रत्यये नासिकाया नसादेशे 'पूर्वपदात्संज्ञायामगः, इति णत्वे च खरणसः इति रूपम् ।

चतुरश्रः—चतस्रोऽश्रयो ( कोणाः ) यस्येति विग्रहे बहुव्रीहौ समासे 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः, इत्यचि यस्येतिचेतीकारलोपे चतुरश्र इति रूपम् ।

सोमजम्भा—शोभनो जम्भो यस्येति विग्रहे बहुव्रीहौ समासे 'जम्भा सुहरिततृणसोमेभ्यः' इत्यनिच्प्रत्यये यस्येतिचेत्यकारलोपे सोमजम्भन्शब्दात् सौ उपधादीर्घे सुलोपे च सोमजम्भेति सिद्धम् ।

सुगन्धिः—शोभनो गन्धो यस्येति विग्रहे बहुव्रीहौ समासे 'गन्धस्येदुत्पूतिसुसुरभिभ्यः, समासान्ते इकारादेशे सुगन्धिरितिरूपम् ।

प्र० ४।

विष्णुपुरम्, पाण्डुभूमः, पञ्चनदम् त्रिचतुराः, राजवर्चसम् श्वःश्रेयसम्, द्विस्तावाः, प्राध्वः एषु के समासान्तप्रत्ययास्तद्विधायकानि च कानि।

उ०—विष्णुपुरम्—विष्णोः पूरिति विग्रहे षष्ठीसमासाद्विष्णुपुरशब्दात् 'ऋक्पूरब्धूःपथामानक्षे' इत्यच्प्रत्ययः समासान्तः।

त्रिचतुराः—त्रयो वा चतुरोवेति विग्रहे 'संख्ययाऽव्ययासन्न' इति बहुव्रीहौ 'त्र्युपाभ्यां चतुरोऽजिष्यते' इति समासान्तोऽच्प्रत्ययः।

श्वः श्रेयसम्—अत्र 'श्वसोवसीयः श्रेयसः' समासान्तोऽच् मयूरव्यंसकादित्वाच्चात्र समासः।

द्विस्तावा—'द्विस्तावा त्रिस्तावा वेदिः' इति सूत्रेणेदं निपात्यते अत्र समासोऽच्प्रत्ययः टिलोपश्च निपात्यते।

प्राध्वः—प्रगतोऽध्वानमिति विग्रहे 'निरादयः' इति समासे 'उपसर्गादध्वनः' इति समासान्तेऽच्प्रत्यये टिलोपः।

प्र० ५।

औडुलौमिः कौञ्जायन्यः, जैवन्तायनः, जातायनः' गाङ्गः, भाद्रमातुरः' गौधारः, आढ्यकुलीनः, गान्धारः, एतेषु के तद्धितप्रत्ययास्तदर्थांश्च के तद्विधायकानि च कानि।

उ०—औडुलौमिः—उडुलोम्नोऽपत्यमिति विग्रहे 'बाह्वादिभ्यश्च' इतीञ्प्रत्ययः, ( नस्तद्धिते इति टिलोपः )

गाङ्गः—गङ्गाया अपत्यमिति विग्रहे गङ्गाशब्दात् 'शिवादिभ्योऽण्' इत्यण्तद्धितः। ( आदिवृद्धौ यस्येतिचेत्याकारलोपश्च )

गौधारः—गोधाया अपत्यमिति विग्रहे गोधाशब्दात् 'आरगुदीचाम्' इत्यारक् तद्धितः।

गान्धारः—अत्र गांधारिशब्दाद 'साल्वेयगान्धारिभ्याञ्च' इत्यञ्।

प्र० ६।

शर्कराशब्दाच्चातुरर्थिकप्रत्ययेषु कति रूपाणि भवन्ति तानि प्रदर्शय।

१९२२

प्र० १।

बलिं भिक्षते वसुधाम्, दर्शयते देवं भक्तं भक्तेन वा, अन्तरेण हरिं न सुखम्,

द्विद्रोणेन धान्यं क्रीणाति, जटाभिस्तापसः, पुष्पेभ्यः स्पृहयति, पुष्पाणि स्पृहयति, न त्वां शुने श्वानं वा मन्ये, शताद् बद्धः, ग्रामस्य पुरस्तात्, नेतव्या व्रजं गावः कृष्णेन, इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्, एषु द्वितीयादिविभक्तिविधायकानि केवलं सूत्राणि प्रदर्शनीयानि ।

उ०—अकथितञ्चेति सूत्रे परिगणितदुह्यादिधातूनामर्थग्रहणात् याचनार्थस्य भिक्षतेरपि ग्रहणेन बलेः कर्मसंज्ञायां द्वितीया, वसुधामित्यत्र तु कर्मणि द्वितीयेति द्वितीया ।

**दर्शयते देवं भक्तं भक्तेन वा**—अत्र 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति वार्तिकेन प्रयोज्यकर्तुर्भक्तस्य कर्मत्वविकल्पे द्वितीयातृतीये । कर्मत्वे द्वितीया तदभावे च अनुक्ते कर्तरि तृतीया ।

अन्तरेण हरिमित्यत्र अन्तरान्तरेणयुक्ते द्वितीयेति द्वितीया ।

द्विद्रोणेनेति—अत्र 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया ।

जटाभिस्तापसः—अत्र 'इत्थम्भूतलक्षणे' इति तृतीया ।

**न त्वां शुने श्वानं वा मन्ये**—अत्र 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति सूत्रघटक अप्राणिष्वित्यपनीय नौकाकान्नशुकश्रृगालवर्जेष्विति वाच्यम्' इति वार्तिकेन प्राणित्वेऽपि चतुर्थीविकल्पः । तेन द्वितीयाचतुर्थ्यौ ।

**शताद् बद्धः**—अत्र 'अकर्तर्यृणे पञ्चमी' इति हेतौ पञ्चमी ।

**ग्रामस्य पुरस्तात्**—इत्यत्र 'षष्ठ्यतसर्थप्रत्ययेन' इति सूत्रेण षष्ठी ।

**नेतव्या व्रजं गाव इति**—अत्र 'कृत्यानां कर्तरि वा' इति सूत्रे कृत्यानामिति योगविभागात् 'उभयप्राप्ताविति' कर्तरि प्राप्ता षष्ठी निषिध्यते तेन कृष्णेनेत्यत्र षष्ठ्यभावे अनुक्ते कर्तरि तृतीया ।

प्र० २ ।

सप्तगङ्गम्, परिविष्णु, मुहूर्तसुखम्, स्थालीपकः, तत्रभुक्तम्, सदृशश्वेतः, उच्चैः कृत्य, आसन्नविंशाः, सपुत्रः, एतेषां समाससंज्ञाविधायकानि सूत्राणि लेख्यानि ।

उ०-सप्तगङ्गम्—इत्यत्र 'नदीभिश्च' इत्यव्ययीभावसमासः ।

परिविष्णु—इत्यत्र 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावसमासः ।

मुहूर्तसुखम्—मुहूर्तं सुखमिति विग्रहे 'अत्यन्तसंयोगे च' इति तत्पुरुषः समासः ।

स्थालीपक्वः—स्थाल्यां पक्व इति विग्रहे 'सिद्धशुष्कपक्वबन्धैश्च' इति सप्तमीतत्पुरुषः ।

तत्र भुक्तम्—अत्र 'तत्र' इति सूत्रेण तत्पुरुषः समासः ।

सदृशश्वेतः—सदृशशब्दस्य तुल्यपर्यायत्वात् 'कृत्यतुल्याख्या अजात्या' इति कर्मधारयः समासः ।

उच्चैः कृत्य—अत्र 'क्त्वा च' इति पाक्षिकः समासः ।

सपुत्रः—अत्र 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिसमासः ।

प्र० ३ ।

रथिकाश्वारोहम्, धानाशष्कुलि, अहिनकुलम्, दासीदासम्, एषु द्वन्द्वैकवद्भावविधायकानि प्रदर्श्य सुपां सुपां तिङा नाम्नेत्यादि कारिका सोदाहरणं व्याख्यायताम् ।

उ०-रथिकाश्वारोहम्—अत्र रथिकाश्चाश्वारोहाश्चेतिविग्रहे 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति द्वन्द्वैकवद्भावः ।

धानाशष्कुलिः—धानाश्च शष्कुलयश्चेति विग्रहे 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावः ।

अहिनकुलम्—अहयश्च नकुलाश्चेति विग्रहे द्वन्द्वसमासे 'येषाञ्च विरोधः शाश्वतिकः' इति द्वन्द्वैकवद्भावः ।

दासीदासम्—अत्र 'गवाश्वप्रभृतीनि च' इत्येकवत्त्वम् ।

सुपां सुपेत्यादि—सुबन्तानां सुबन्तेन तिङा प्रातिपदिकेन धातुनाच समासः तिङन्तानां तिङन्तेन सुबन्तेन च समासः इत्येवं बुधैः षड्विधः समासो ज्ञेय इति कारिकार्थं अथोदाहरणानि क्रमेण-राजपुरुषः–अत्रराज्ञ इति षष्ठ्यन्तस्य सुबन्तेन समासः । पर्यभूषयत—अत्र परीति सुबन्तस्य अभूषयत् इति तिङन्तेन सह 'सह सुपा' इत्यत्र सहेति योगविभागात्समासः । कुम्भकारः—अत्र 'उपपदमतिङ्' इति सूत्रेण कुम्भस्येति षष्ठ्यन्तस्य कारेति प्रातिपदिकेन समासः । कटप्रूः—'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजिश्रीणां दीर्घोऽसम्प्रारणञ्च' इति वार्तिकेन कटस्य 'प्रु' धातुना समासो निपातितः । पिबतखादत–अत्र मयूरव्यंसकादित्वात् तिङन्तस्य तिङन्तेन समासः । कृन्तविचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा अत्र कृन्तेति तिङन्तस्य विचक्षण इति सुबन्तेन सह 'एहीडादयोऽन्यपदार्थे' इति मयूरव्यंसकादौ पाठात्समासः ।

प्र० ४ ।

खितरा, पञ्चिष्कः, उदौदनः, श्रीमदः, रात्रिमटः, सोदर्यः, कृषीवलः, विश्वानरः, क्षीरपाणम्, अजस्तुन्दम्, एषु कानि विशेपकार्यविधायकानि ।

उ०—खितरेत्यत्र—'नद्याः शेपस्यान्यतरस्याम्' इति स्त्रीशब्दस्य पाक्षिकं ह्रस्वत्वम् ।

उदौदनः—अत्रोदकमिश्र ओदन इति विग्रहे समासे 'मन्थौदनसक्तुबिन्दुवज्रभार' इत्यदिनोदकशब्दस्योदादेशः ।

श्रीमदः—अत्र इको ह्रस्वोऽड्योगालवस्येति सूत्रेण प्राप्तस्य ह्रस्वस्य 'इयङुवङ् भाविनामव्ययानाञ्च नेति वाच्यम्' इति वार्तिकेन निषेधः ।

सोदर्यः—समाने उदरे वासीत्यर्थे यति 'विभापोदरे' इति समानशब्दस्य पाक्षिकः सभावः ।

कृषीवलः—कृपिरस्यास्तीति विग्रहे कृपिशब्दात् 'रजः कृष्यासुति परिपदो वलच्' इति वलच्प्रत्यये 'वले' इति दीर्घः ।

विश्वानरः—अत्र नरे संज्ञायाम्' इति विश्वशब्दस्य दीर्घः ।

क्षीरपाणम्—क्षीरं पानं येषां ते इति विग्रहे ल्युटि 'पानं देशे इतिणत्वम् ।

प्र० ५ ।

वातराज्यः, आश्वायनः, वैश्वामित्रः, कानीनः, दात्तेयः कौपीतकेयः, मैत्रेयः, आगवित्तिकः, एतानि संसाध्य ञ्यतोर्ञित्वस्य फलं प्रदर्शयत ।

ग्रन्थानुपूर्वीमात्रलेखेनाङ्कलाभो नास्ति ।

आश्वायनः—अश्वस्य गोत्रापत्यमितिविग्रहे अश्वशब्दात् 'अश्वादिभ्यः फञ्' इति फञ्प्रत्यये फस्यायनादेशे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ यस्येति चेत्यकारलोपे आश्वायन इति सिद्धम् ।

वैश्वामित्रः—विश्वामित्रस्य गोत्रापत्यमिति विग्रहे विश्वामित्रशब्दात् 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि 'तद्धितेष्व०' इत्यादिवृद्धौ यस्येति चेत्यकारलोपे वैश्वामित्रः ।

कानीनः—कन्याया अपत्यमिति विग्रहे कन्याशब्दात 'स्त्रीभ्योढक्' इति प्राप्तं ढकं बाधित्वा 'कन्यायाः कनीन च' इत्यण्प्रत्यये कन्याशब्दस्य कनीनादेशे 'तद्धिते' इत्यादिवृद्धौ यस्येतिचेत्यकारलोपे कानीन इति सिद्धम् ।

कौषीतकेयः—कुषीतकस्यापत्यमितिविग्रहे कुषीतकशब्दात् 'विकर्णकुषीतकात्काश्यपे' इति ढकि कित्वात् कितिचेत्यादिवृद्धौ ढस्य एयादेशे कौषीतकेयः ।

भागवित्तिकः—भागवित्तेरपत्यं युवेत्यर्थे भागवित्तिशब्दात् 'वृद्धाट्ठक् सौवीरेषु बहुलम्' इति ठक् प्रत्यये ठस्येकादेशे यस्येति चेत्यकारलोपे भागवित्तिक इति रूपम् ।

सन् १६२४

प्र० १ ।

येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्रा कर्मकाः नत्वविवक्षितकर्माणोऽपि, इत्यत्र प्रमाणं कौमुदीकाररीत्या प्रदर्श्य अन्यकर्तृकोऽभिलापो रुचिरिति पङ्क्तिर्व्याख्येया ।

उ०—ननु गतिबुद्धीतिसूत्रे अकर्मपदस्य न विद्यते कर्म्मयेषामित्यर्थे सकर्म्मकाणामपि कर्म्मणोऽविवक्षयाऽकर्म्मत्वात् देवदत्तेन पाचयतीत्यादौ देवदत्तस्यापिकर्म्मत्वापत्तिरित्यतआह—येषां देशकालादि इति अयम्भावः नियमस्य सजातीयापेक्षत्वात् गतिबुद्धीतिसूत्रस्य सकर्म्मकधातुप्रकृतिकणिजर्थव्यापारप्रयोज्य फलाश्रयाणां कर्म्मत्वं चेत्तर्हि गत्यर्थादीनामेवेति नियमार्थत्वेन आसयत् सलिले पृथ्वीमित्यादौ पूर्वसूत्रेण कर्म्मत्वसिद्धौ सूत्रे ऽकर्म्मकपदस्य सामर्थ्याद्देशे कालादिभिन्नकर्म्माभाववतो ग्रहणम् । तेन देवदत्तेन पाचयतीत्यादौ देशकालाद्यतिरिक्तस्यौदनादिरूप कर्म्मणः सत्वेन तदविवक्षणेप्यकर्म्मक पदेनाग्रहणम् नोक्तदोषः ।

अन्यकर्तृक इति—ननु हरिर्भक्तिमभिलषतीत्यत्रापि भक्तेः प्रीतिविषयत्वात् संप्रदानत्वं स्यादत आह । अन्यकर्तृकोऽभिलापो रुचिरिति—समवायेन प्रीत्याश्रया पेक्षया यदन्यत् तत्कर्तृकाभिलापो रुचधात्वर्थः । प्रीत्याश्रयकर्त्तृकः किञ्चिद्विषयक इच्छाविशेषोऽभिलापः । तथाचाभिलषतेः रुच्यर्थकत्वाभावान्न तद्योगे सम्प्रदानत्वम् । उदाहरणे च प्रीत्याश्रयो हरिः तदपेक्षया यदन्यत् भक्तिः तत्कर्तृकैव प्रीतिरिति रुच्यर्थयोगः । ननूदाहरणे भक्तेः सम्प्रदानत्वं कुतो न स्यात् । विषयतासम्बन्धेन भक्तेरपि प्रीत्याश्रयत्वादित्यत आह—हरिनिष्ठेत्यादि । हरेरेव समवायसम्बन्धेन प्रीत्याश्रयतया प्रीयमाणत्वात् भक्तेः कर्त्र्या उक्तरीत्या प्रीयमाणत्वाभावाच्च न सम्प्रदानत्वमिति ।

प्र० २ ।

पुष्पेभ्यः स्पृहयति, पुष्पाणि स्पृहयतीति वाक्यद्वयघटक द्वितीयाचतुर्थ्योः

साधुत्वमुपपाद्य 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रं सोदाहरणं व्याख्यायैतत्सूत्रघटकपदकृत्यानि चोपदर्शनीयानि ।

क्रियार्थोपपदस्यचेति क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था । क्रियार्था क्रिया उपपदं यस्येति विग्रहः । तुमुनोविशेषणमेतत् । उपोच्चारितं पदमुपपदम् । स्थानिन इत्यपि तद्विशेषणम् । स्थानं प्रसक्तिरस्यास्तीति स्थानी तस्य । अप्रयुज्यमानस्येति यावत् । तदेवं क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यादिति सूत्रार्थः । फलेभ्योयाति । अत्र फलाहरणक्रियार्था यान क्रिया, तद्वाचके उपपदे आहर्त्तुमित्यध्याहारलभ्यतुमुन्नन्तार्थाहरण क्रियां प्रति फलानां कर्मत्वात्सम्प्रदानत्वम् । नमस्कुर्मो नृसिंहायेत्युदाहरणान्तरम् । अत्र नृसिंहमनुकूलयितुमिति तुमुन्नन्तस्याध्याहारः । अथपदकृत्यानि । क्रियार्थोपपदस्येतिकिम् । प्रविश पिण्डीम् । भक्षिरत्रस्थानि नतु क्रियार्थोपपदः । कर्मणीतिकिम्–एधेभ्योव्रजति, शकटेन स्थानिन इति किम्–एधानाहर्त्तुं व्रजति ।

प्र० ३ ।

यतश्चाध्वकालनिर्माणं तत्र पञ्चमीत्यत्र निर्माणपदार्थं निरूच्य 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रते'रित्यत्र साधुग्रहणस्य प्रयोजनं किमिति सुस्पष्टं लेखनीयम् ।

उ०–यतश्चाध्वेत्यत्र परिच्छेद इयत्ता निर्माणपदार्थः ।

साध्वसाधुप्रयोगे चेति वार्तिकेनार्चायामनर्चायाञ्च सप्तमी सिद्धा, अनचार्थञ्च तदावश्यकमिति किमत्र साधुग्रहणेनेति प्रष्टुराशयः । उत्तरदित्सोस्त्वयमाशयः,–अर्चायां प्रत्यादियोगे सप्तमी माभूदिति । साधुग्रहणाभावे हि प्रत्यादियोगेऽपि तेन सप्तमी स्यादेव ।

प्र० ४ ।

उपसमिधम्, दीर्घसक्थम्, बहिर्लोमः, सुप्रजाः केशाकेशि, एषु समासान्त प्रत्ययान्प्रदर्श्यानङादेशे नकारकरणप्रयोजनं निगदनीयम् ।

दीर्घसक्थम्—दीर्घे सक्थिनीयस्येति विग्रहे 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' । यस्येतिचेति लोपः ।

बहिर्लोमः—बहिर्लोमानि यस्येति बहुव्रीहौ 'अन्तर्बहिर्भ्याञ्च लोम्नः' इत्यप् समासान्तः । 'नस्तद्धिते' इति टिलोपश्च ।

सुप्रजाः—शोभना प्रजा यस्येति विग्रहे बहुव्रीहौ समासे नित्यमसिच्प्रजामेधयोः' इति असिच् प्रत्ययः ।

आनङो नकारो न क्वचिच्छ्रूयते सर्वत्रैव न लोपः प्रातिपदिकान्तस्येति लोपेनापहारात् । नापि किञ्चित्कार्यमस्योपलभ्यते तत्किमर्थं नकारोच्चारणमिति प्रष्टुराशयः । असति नकारे ऋकारस्य स्थानेऽणेव विधीयेत ततश्चोरण्रपर इति रपरत्वं स्यात् । नकारे तु सति नायमणेव शिष्यते अपित्वण् चानण् च न प्रवर्तते रपरत्वम् । यतः खलु सुधातुरकङ्चेत्यादाविव यत्राण्चानण् च विधीयते तत्र रपरत्वं न प्रवर्तते ।" इत्युत्तरदित्सोराशयः ।

प्र० ५ ।

चौध्यः, जातायनः, भाद्रमातुरः, चाटकरः, मैत्रेयः, आढ्यकुलीनः, साल्वेयः, श्रायम् एतान् संसाध्य बुञ्छणिति सम्पूर्णसूत्रं लेखनीयम् ।

चाटकैरः—चटकाया अपत्यमित्यर्थे चटका शब्दात् 'चटकाया ऐरक्' इति ऐरक्प्रत्यये कित्वात् किति चेति वृद्धौ यस्येति चेत्यकारलोपे चाटकैरः ।

साल्वेयः—साल्वेयस्यापत्यं राजावेत्यर्थे साल्वेयशब्दात् 'साल्वेयगान्धारिभ्याञ्च' इत्यञ् यस्येतिचेत्यकारलोपः ।

सन् १९२५ ।

प्र० १ ।

कर्तुरीप्सिततममिति सूत्रे तमब्ग्रहणफलं कर्मग्रहणप्रयोजनं च प्रतिपाद्य हेतुकरणयोर्वैलक्षण्यं सोदाहरणं स्पष्टीक्रियताम् ।

कर्मग्रह०—यद्यपि 'अधिशीङ्स्थासांकर्म' इत्यतः कर्मपदानुवृत्तिः सम्भवति तथापि तत्राधार इत्यस्यानुवृत्तेरत्रापि तत्सम्बद्धस्यैव कर्मपदस्यानुवृत्तिः स्यात्सा माभूदिति कर्मग्रहणं क्रियते । अन्यथा गेहं प्रविशतीत्यत्रैव कर्मसंज्ञा स्यात् हरिं भजतीत्यादा तु न स्यात् ।

हेतुकरणयोर्वैलक्षण्यम् । द्रव्यगुणक्रियात्मक कार्यत्रयनिरूपितं निर्व्यापारसव्यापारवृति च यत् स हेतुः । क्रियाजनकमात्रवृत्ति व्यापारवृत्ति च यत् तत् करणम् इति हेतुकरणयोर्वैलक्षण्यम् ।

प्र० २ ।

अह्नाक्रोशेन वानुवाकोऽधीतः, दास्या संयच्छेत कामुकः, यागाय याति, दक्षिणेन ग्रामस्य, अधीती व्याकरणे एषु विभक्तिविशेषविधायकानि शास्त्राणि प्रदर्श्यन्ताम् ।

उ०—अक्ष्णा क्रोशेन वानुवाकोऽधीत इत्यत्र 'अपवर्गे तृतीया' इति तृतीया । दास्या संयच्छते कामुकः अत्र 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति वार्तिकेन चतुर्थ्यर्थे तृतीया ।

यागाय याति अत्र तुमर्थाच्च भाववचनात्' इति चतुर्थी ।

दक्षिणेन ग्रामस्येत्यत्र 'एनपा द्वितीया' अत्र एनपेति योग विभागात्तद्योगे षष्ठी । अधीती व्याकरणे अत्र 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति वार्तिकेन सप्तमी ।

प्र० ३ ।

शाक प्रति, परोक्षम्, अर्धपीप्पली, पूर्वाह्णः, विग्रः बदरामलकम्, अग्नीषोमौ, एषु प्रयोगेषु समासास्तत्प्रयुक्तकार्यविशेषाश्च शास्त्राण्युपन्यस्य समर्थनीयाः ।...१०

उ०—शाकप्रति— शाकस्य लेश इति विग्रहे मात्रार्थकेन प्रतिना शाकशब्दस्य 'सुप् प्रतिनामात्रार्थे' इति समासे 'सुपोधातु' इति सुपोलुक्कि समासविधौ सुबन्तस्य प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात्पूर्वनिपाते समुदायादुत्पन्नस्य सुपः अव्ययादाप्सुपः' इति लुकि शाकप्रति इति सिद्धम् ।

अर्धपिप्पली—अर्धं पिप्पल्या इति विग्रहे अर्ध सु पिप्पली ङस् इत्यलौकिक विग्रहे च अर्धं नपुंसकम्' इति अर्धशब्दस्य पिप्पलीशब्देन सह समासे प्रथमानिर्दिष्टमित्यर्धशब्दस्योपसर्जनत्वेन पूर्वनिपाते, पिप्पलीशब्दस्य विग्रहेनियतविभक्तिकत्वेऽपि 'एकविभक्तावषष्ठ्यन्तवचनम्' इति वार्तिकेन निषेधादुपसर्जनत्वाभावात् 'गोस्त्रियोः' इति ह्रस्वाप्रवृत्तौ अर्धपिप्पली इति जातम् ।

पूर्वाह्णः—पूर्वमहरिति विग्रहे 'पूर्वकाल' इति समासे 'राजाहः सखिभ्यष्टच्' इति टचि 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशे 'अह्नोऽदन्तात्' इति—णत्वे पूर्वाह्णः इति सिध्यति । 'रात्राह्नाहाः पुंसि' इति पुंस्ययं शब्दः ।

विग्रः—विगता नासिका यस्येति विग्रहे बहुव्रीहौ समासे 'वेर्ग्रो वक्तव्यः' इति वार्तिकेन नासिकाशब्दस्य ग्रादेशे विग्रइति रूपम् ।

बदरामलकम्—बदराणि चामलकानि चेति विग्रहे बदरामलकशब्दयोः द्वन्द्वसमासे 'विभाषा वृक्षमृगतृण' इत्यादिना एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे च बदरामलकम् इति निष्पन्नम् ।

प्र० ४।

एकशेषस्य द्वन्द्वसमासोत्तरं प्रवृत्तिस्वीकारे सम्भावितं दोषमुपपाद्य।

सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः॥

इति कारिका सोदाहरणं व्याख्यायताम्।

उ०—कृते द्वन्द्वे एकशेषाभ्युपगमे शिरसी इति द्विवचने शिरांसीति बहुवचने च समासस्येत्यन्तोदात्तः स्यात्। प्राण्यङ्गत्वात् 'द्वन्द्वश्च प्राणि' इत्यादिना एकवद्भावश्च स्यात्। तेन द्वन्द्वात्प्रागेवैकशेषः स्वीक्रियते।

प्र० ५।

ब्रह्मवर्चसम्, मातुःष्वसा, कारीषगन्धीमाता, श्वादन्तः, कातीयाः, षाण्मातुरः, जाडारः, गार्भिगम् पान्थायनः। एते प्रयोगाः सूत्रादिनिर्देशपुरस्सरं साध्याः। ...१२

मातुःष्वसा—मातुः स्वसेति विग्रहे षष्ठीसमासे 'विभाषा स्वसृपत्योः' इति षष्ठ्या अलुकि 'मातुः पितुर्भ्यामन्यतरस्याम्' इति पाक्षिके षत्वे मातुःष्वसा इति रूपम्।

कातीयाः—कतस्य गोत्रापत्यं कात्यः। गर्गादित्वाद्यञ्। तस्यापत्यं युवा कात्यायनः 'यञिञोश्च' इति फक्। कात्यायनस्य छात्रा इत्यर्थे 'तस्येदमित्यनुवृत्तौ 'वृद्धाच्छः' इति छः। ईयादेशः। अत्रछात्रार्थकछप्रत्यये विवक्षिते युवार्थकफकः 'फक्फिञोरन्यतरस्याम्' इति लुकि, कात्य ईय इति स्थिते यस्येति चेत्यकारलोपे 'आपत्यस्य च' इति यलोपे कतीया इति रूपम्।

षाण्मातुरः-षण्णां मातॄणामपत्यमिति विग्रहे 'तद्धितार्थ' इत्यादिना समासे 'मातुरुत्संख्यासंभद्रपूर्वायाः' इत्यणि ऋकारस्योकारे रपरत्वे आदिवृद्धौ षाण्मातुर इति सिद्धम्।

जाडारः—जडस्यापत्यमिति विग्रहे जडशब्दात् आरगुदीचामिति आरक्प्रत्यये किन्वात्किति चेत्यादि वृद्धौ यस्येतिचेत्यकारलोपे जाडार इति निष्पन्नम्।

पान्थायनः—पथ अदूरभव इत्यर्थे 'बुञ्छण्' इत्यादिना फकि 'पथः पन्थ च' इति गणसूत्रेण पथः पन्थादेशे फस्यायन्नादेशे आदिवृद्धौ यस्येतिचेत्यकार लोपे पान्थायन इति निष्पन्नम्।

प्र० ६ ।

एको गोत्रे इति सूत्रस्य वैयर्थ्यमाशङ्क्य तस्य समाधानं क्रियताम् । ...१८

१९२६

प्र० १ ।

श्रीः द्रोणो व्रीहिः, कुरून् स्वपिति, अधिशेते वैकुण्ठम्, प्रकृत्या चारुः, एषु कस्मिन्नर्थे विभक्तयः । ...१०

उ०—श्रीशब्दे नियतोपस्थितः प्रातिपदिकार्थं इति स्त्रीत्वस्य नियमेन भानात् श्रीः इत्यत्र प्रातिपदिकार्थमात्रे प्रथमा ।

द्रोणो व्रीहिः—इत्यत्र परिमाणमात्रे प्रथमा । नच द्रोणशब्दस्य परिमाणविशेषवाचिनः प्रातिपदिकार्थमात्र इत्येव, लिङ्गमात्राद्याधिक्ये इत्येववासिद्धं किं परिमाणग्रहणेनेति चेन्न । नहि द्रोणत्वेन रूपेण परिमाणविशेषवाचिद्रोणशब्दात् स्वार्थे प्रथमा विभक्तिरिष्यते येन प्रातिपदिकार्थमात्रे इत्यनेन गतार्थता स्यात् । किन्तु द्रोणत्वेन परिमाणवाचिनो, द्रोणशब्दात् परिमाणत्वसामान्यरूपेण द्रोणपरिमाणे विवक्षिते प्रथमाविभक्तिरिष्यते ।

कुरून् स्वपिति—इत्यत्र 'अकर्मकधातुभिर्योगे देशः कालोभावो गन्तव्योऽध्वा च कर्मसंज्ञक' इति वार्तिकेन कुरुष्वित्याधारस्य कर्मत्वात् द्वितीयाऽतोऽत्राधारे द्वितीया ।

अधिशेते वैकुण्ठम्—इत्यत्र 'अधिशीङ्स्थासां कर्म' इत्याधारस्यकर्मत्वादाधारे द्वितीया ।

प्रकृत्या चारुः—इत्यत्र प्रकृतिः स्वभावस्तत्संबन्धिचारुत्ववानित्यर्थात् सबन्धे तृतीया । सा च 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकेन ।

प्र० २ ।

जगतः कृतिः, अधिती व्याकरणे, भूतपूर्वः, वहिर्वनम्, देवपूजकः, एषु विशेषकार्याणि प्रदर्शय ।

उ०-जगतः कृतिः-इत्यत्र 'उभयाप्राप्तौ कर्मणि' इति कृद्योगे कर्मणि षष्ठी । भावक्तान्तात् अधीतशब्दात् कर्तरीनिप्रत्यये कृते अधीतवानित्यर्थः । तत्र अध्ययने कर्मत्वेनान्विते व्याकरणे 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' । इति सप्तमी ।

भूतपूर्वः—पूर्वंभूत इति विग्रहे 'सुपा' इति योग विभागात् समासे समासत्वात् 'कृत्तद्धितसमासाश्चेति प्रातिपदिकत्वे 'सुपोधातु' इति सुपोलुकि 'भूतपूर्वे चरट्' इति निर्देशात् भूतशब्दस्य पूर्वनिपाते। समासत्वेन प्रतिपदिकत्वात् समुदायात्पुनर्यथायथं सुबुत्पत्तौ भूतपूर्वं इति रूपम्

वहिर्वनम्-वनात् बहिः इति विग्रहे 'अपपरिबहि–' इत्यादिनाव्ययीभावमासे समासत्वेन पतिपदिकसंज्ञायां 'सुपो धातु 'इत्यादिना सुपोलुकि 'प्रथमा निर्दिष्टम्। इत्यनेन बहिः शब्दस्योपसर्जन संज्ञायां पूर्वनिपाते पुनः समासादुत्पन्नस्य सोरम्भावे रूपमिदं जायते।

देवपूजकः—देवानां पूजक इति विग्रहे षष्ठीति प्राप्तस्य षष्ठीसमासस्य 'तृजकाभ्यां कर्तरि' इत्यनेन निषिद्धत्वात् याजकादिभ्यश्चेति समासे सुपो लुकि षष्ठ्यन्तस्य समासविधौ प्रथमानिर्दिष्टत्वेनोपसर्जनत्वे पूर्वनिपाते देवपूजक इति।

प्र० ३

गेहेनर्दी, महाप्रिया सर्वरात्रः, पोडन्, रूपवद्भार्यः, एषु समासादिकार्याणि त्रनिर्देशपुरस्सरं लेख्यानि। ...१०

उ०—गेहेनर्दी-इति विग्रहे पात्रेसमितादयश्चेतिसमासे निपातनात्सप्तम्या अलुकि गेहेनर्दीति सिध्यति। गेह एव गर्जतिनतु युद्धादाविति तदर्थः।

महती चासौ प्रियाचेति विग्रहे 'सन्महात्' इत्यादिना कर्मधारयसमासे प्रियादिपर्युदासेन 'स्त्रियाः पुंवत्' इत्यप्राप्तः पुंवद्भावः 'पुंवत्कर्मधारय' इत्यादिना विधीयते कृते पुंवत्वे आन्महत इत्यात्वम्।

रूपवती भार्या यस्येति विग्रहे बहुव्रीहौ समासे रूपवती शब्दस्य स्त्रियाः पुंवत्' इति पुंवद्भावे भार्याशब्दस्य गोस्त्रियोरिति ह्रस्वत्वे रूपवद्भार्यः इति निष्पन्नम्।

प्र० ४।

अशक्तः, दधिपयसी हंसौ, पदातिः गर्गभगिनी एषां साधुत्वप्रकारं सम्यगुपपादयत। ...१०

उ०—अविद्यमाना शक्तिर्यस्येति विग्रहे बहुव्रीहौ समासे 'नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्' इति सूत्रेण समासान्तेऽच्प्रत्यये यस्येतिचेतीकारलोपे अशक्त इति रूपम्। हलिशक्त्योरिति सूत्रपाठः क्वाचित्कः।

दधि च पयश्चेति विग्रहे जातिरप्राणिनामिति नित्यमेकवत्वं प्राप्तं बाधित्वा

व्यञ्जनद्वन्द्वत्वाद्विकल्पः प्राप्तस्तस्यापि 'न दधिपयआदीनि' इति निषेधः । तत्र औकारविभक्तौ 'नपुंसकाच्च' इति नस्य शीभावे दधिपयसी इति रूपम् ।

हंसीच हंसश्चेति विग्रहे द्वन्द्वसमासे 'पुमान् स्त्रिया' इत्येकशेषेण हंसीशब्दस्य लोपे हंसाविति सिध्यति ।

प्र० ५ ।

दाक्षिः, नाडायनः कौरव्यः, कार्यं हविः वैयासकिः, एतान्संसाध्य सिद्धे यस्येति लोपेनेति कारिका व्याख्येया ।

उ०—दक्षस्यापत्यमित्यर्थे दक्षशब्दात् 'अतइञ्' इति इञ्प्रत्यये तद्धितेष्वचामादेरित्यादिवृद्धौ यस्येतिचेत्यकारलोपे तद्धितान्तत्वात्प्रातिपदिकत्वे सौ दाक्षिरिति सिद्धम् ।

नडस्यापत्यमित्यर्थे नडशब्दात् 'नडादिभ्यफक्, इति फकिफस्यायन्नादेशे किितिचेत्यादिवृद्धौ यस्येति चेत्यकारलोपे नाडायन इति जातम् ।

कौरव्यः—कुरोरपत्यं कुरूणां राजावेति विग्रहे कुरुशब्दात् 'कुरुनादिभ्योण्यः ।' इति ण्यप्रत्यये 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'ओर्गुणः' इत्युकारस्य गुणे अवादेशे चोक्तंरूपम् ।

व्यासस्यापत्यमित्यर्थे व्यासशब्दात् 'व्यासवरुडनिपादचण्डालबिम्बानाञ्चेतिवक्तव्यमिति वार्तिकेन इञ्प्रत्यये प्रकृतेरकङादेशे च पदान्ताद्यकारात् पूर्वं वृद्धिं बाधित्वा 'नय्वाभ्यां पदान्ताभ्यां पूर्वौतु ताभ्यामैच्' ऐकारागमेवैयासकिरिति रूपम् सिद्धे यस्येति लोपेनेति कारिकाव्याख्यानम्—इति पूर्ववत् ।

१९२७

प्र० १ ।

माणवकं पन्थानं पृच्छति स्मारयति देवदत्तेन, अभिनिविशते सन्मार्गम्, सुखेन याति, चौरस्योज्जासनम्, एषु विभक्त्यर्थान्न प्रदर्श्य तन्त्रग्रहणं किं पयसौदनं भुङ्क्ते इति व्याख्येयम् ।

उ०—माणवकं पन्थानं पृच्छतीत्यत्र पन्थाः प्रधानकर्म, माणवकश्च गुणकर्म । माणवकेन पन्थानं ज्ञातुमिच्छतीत्यर्थः । माणवके करणत्वमुपेक्ष्य 'अकथितञ्च' इति कर्मत्वविवक्षायां द्वितीया तेन पथिशब्दोत्तरद्वितीयायाः कर्मत्वमर्थः, माणवकशब्दोत्तरद्वितीयायाश्च करणत्वमर्थः ।

स्मारयति देवदत्तेन अत्र स्मरति प्रियां देवदत्तः तं यज्ञदत्तः प्रेरयतीत्यर्थे न स्मरते ज्ञानार्थत्वे गति बुद्धीत्यादिनाकर्तुर्देवदत्तस्य न कर्मत्वम् । सूत्रे ज्ञानसामान्यवाचितामेव ग्रहणात् । अत्र च, 'दृशेश्च' इति वार्तिकं लिङ्गम् ।

अभिनिविशते सन्मार्गमित्यत्र 'अभिनिविशश्च इत्याधारस्य कर्मसंज्ञात्वादाधारो द्वितीयार्थः ।

सुखेन याति—अत्र 'प्रकृत्यादिभ्य उपसंख्यानम्' । इति तृतीया ।

**चौरस्योज्जासनम्**—अत्र कर्मीभूतचौरसंबन्धिनी हिंसेत्यर्थः । कर्मणः शेषत्वविवक्षया 'जासिनिप्रहण' इत्यादिना षष्ठी । तेन कर्मत्वं षष्ठ्यर्थः ।

२ प्र० ।

अधिहरि, परोक्षम्, नखनिर्भिन्नः, दन्तलेखकः अष्टागवम्, ब्राह्मणी भार्यः एतेषु समासादिविशेषकार्याणि सूत्रोपन्यासपूर्वकं लिखत । १०...

उ०—हरौ इति लौकिकविग्रहवाक्ये हरि ङि अधि इत्यलौकिकविग्रहवाक्ये 'अव्ययं विभक्ति' इत्यादिना विभक्त्यर्थेऽव्ययीभावसमासे कृत्तद्धितेति प्रातिपदिकत्वे सुपो धातु इति विभक्तेर्लुकि समासविधायकशास्त्रेऽव्ययमित्यस्य प्रथमानिर्दिष्टत्वादधीत्यव्ययस्य 'प्रथमानिर्दिष्टम्' इत्युपसर्जनसंज्ञायां पूर्वनिपाते अव्ययीभावश्चेत्यव्ययसंज्ञायां अधिहरीति समुदायादुत्पन्नस्य सुपः अव्ययादाप्सुपः' इति लुकि अधिहरि इति सिध्यति ।

नखैर्निर्भिन्न इति विग्रहे 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया भिन्नेति क्तान्तेन निरुपसृष्टस्य निर्भिन्न इत्यस्यापि ग्रहणात् 'कर्तृ करणे कृताबहुलम्' इति सूत्रेण तत्पुरुषे समासे समासत्वात्प्रातिपदिकत्वे सुपोलुकि नखनिर्भिन्न इति समासात्पुनः सौ तस्य रुत्वविसर्गयोश्च नखनिर्भिन्न इति रूपम् । दन्तानां लेखक इति विग्रहे दन्त आम् लेखक सु इत्यलौकिकविग्रहे च 'नित्यं क्रीडाजीविकयोः' इति षष्ठीसमासे समासत्वात्प्रातिपदिकत्वे सुपोलुकि समुदायात्पुनः सौ दन्तलेखक इति सिद्धम् ।

अष्टौ गावो यस्येति बहुव्रीहौ समासे अच्प्रत्यन्तवत् । इत्यत्र 'अच्' इति योगविभागाद्बहुव्रीहावप्यचि 'गवि च युक्ते' इत्यष्टन्शब्दस्यात्वे सवर्णदीर्घ गोशब्दस्यावादेशे च 'अष्टागवमिति रूपम् । यद्वा अष्टानां गवां समाहार इति समाहार द्विगोस्तत्पुरुषत्वात् गोरतद्धितलुकि' इति टचि अष्टगवम्, अस्याष्टगवशब्दस्य

लक्षयाष्टभिर्गोभिर्युक्तं वर्तमानस्यात्व चाष्टागवमिति रूपम् ।

ब्राह्मणीभार्या यस्येति विग्रहे बहुव्रीहौ समासे 'स्त्रियाः पुंवत्' इति प्राप्तस्य पुंवद्भावस्य 'जातेश्च' इति निषेधात् शार्ङ्गरवादिङीनोऽनिवृत्तौ भार्याशब्दस्य गोस्त्रियोरितिह्रस्वत्वे ब्राह्मणीभार्य इति सिध्यति ।

प्र० ३ ।

द्विभूमः प्रासादः शुक्ली भावः, अन्याशीः, अन्यत्कारकम्, अभीरुक्, पटुरुक् एषु विग्रहप्रदर्शनपूर्वकं विशेषकार्याणि लिखत ।

द्विभूम इति—द्वे भूमी यस्येतिविग्रहे बहुव्रीहिसमासे 'कृष्णोदक्' इति वार्तिकेन समासान्तेऽचि 'यस्येति च' इत्यकारलोपे विभक्तिकार्यंचोक्तंरूपम् ।

शुक्लीभावः—अत्र इकोह्रस्वोऽङ्योगालवस्येति ह्रस्वो न इयङुवङ्भाविगामव्ययानाञ्चनेतिनिषेधात् अन्यस्यान्येन वाशीरिति विग्रहे 'अषष्ठ्यतृतीयास्थस्य' इत्यस्याप्रवृत्तेर्दुगागमाभावे सवर्णदीर्घे "अन्याशीरिति" रूपम् ।

अन्यस्य कारकमिति विग्रहे 'कारके छेच नायं निषेधः' इति भाष्योक्तेः अषष्ठ्येति निषेधस्याप्रवृत्तौ दुगागमेऽन्यत्कारकमिति रूपम् ।

अभितः रोचते इति विग्रहे अभिपूर्वाद्रुचेःक्विपि 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इत्यभिशब्दस्य दीर्घे "अभीरुक्" इति सिद्धम् ।

पटु रोचते इति विग्रहे कर्तरि क्विपि 'नहिवृतिवृषीत्यादि सूत्रे 'विभाषा पुरुषे' इत्यतो मण्डूकप्लुत्या विभाषाया अनुवर्तनात् तस्याश्च व्यवस्थितविभाषात्वात् गतिकारकयोरेवैतत्सूत्रप्रवृत्तेः पटुशब्दस्य च गतिकारकभिन्नत्वाद्दीर्घाभावे "पटुरुक्" इति रूपम् ।

प्र० ४ ।

प्राग्दिश इति यावत् समर्थानामित्यतः समर्थपदानुवृत्तिफलप्रदर्शनपूर्वकं तदर्थमुपवर्ण्य यास्कीयाः, यास्कायनिः, वातण्डः, वैयाघ्रः, पान्थायनः, एतान्संसाध्य (प्रत्ययार्थनिर्देशपुरस्सरम्) तस्येदमित्यपत्येऽपीत्यादिकारिका व्याख्येया... १५

उ०—समर्थः पटुः शक्त इति पर्यायाः । शक्तत्वञ्च कार्योत्पादनयोग्यत्वम् । शब्दस्य च कार्यमर्थप्रतिपादनमेव तच्च कृतेष्वेव सन्धिकार्येषु सम्भवति अतोऽत्र कृतसन्धिकार्यत्वमेव सामर्थ्यम् । तेन सुशोभन उत्थितः सूत्थितः । प्रादिसमासे सवर्णदीर्घः । सूत्थितस्यापत्यं सौत्थितिः । अत इञ् । सुब्लुक् आदिवृद्धिः यस्येति-

स्यकारलोपः । कृतसन्धेरित्यस्याभावेतु सु उत्थित इत्यस्यामेव दशायां सवर्णदीर्घात्प्रत्ययादादिवृद्धौ कृतायामावादेशे साबुत्थितिरिति स्यात् । नन्वन्तरङ्गत्वात्सवर्णदीर्घे-कृते तदुत्तरमेव तद्धित उचितः । परादन्तरङ्गस्य बलवत्वात् । ततश्च सन्धेः प्राक् तद्धितोत्पत्तेरप्रसक्तेः कृतसन्धेरिति व्यर्थमेवेति चेन्न । अन्तरङ्गपरिभाषाया अप्यपवादभूतया अकृतव्यूहपरिभाषया सन्धेः प्रागेव प्रत्ययः स्यात् । एवञ्च सवर्णदीर्घात्प्रागेवादिवृद्धौ आवादेशे साबुत्थितिरिति स्यात् ।

यस्कस्य गोत्रापत्यमित्यर्थे यस्कशब्दाच्छिवाद्यण् यास्कः । तस्यापत्यं युवेत्यर्थे 'अणो द्व्यचः'इति फिञि आयन्नादेशे यास्कायनिः यास्कायनेः छात्रा इत्यर्थे 'वृद्धाच्छः' इति छप्रत्ययः । ईयादेशः । छात्रार्थकछप्रत्यये विवक्षिते युवार्थकफिञो 'फक्फिञोरन्यतरस्याम्' इति पाक्षिके लुकि 'यस्येति च' इतीकारलोपे यास्कीया इति रूपम् ।

वतण्डस्यापत्य ( अनाङ्गिरसम् ) मित्यर्थे शिवादिभ्योऽणित्यणि वातण्डः । यञ्प्रत्ययस्तु न तस्याङ्गिरस एव विधानात् ।

## सन् १६२८

### प्र० १ ।

कर्मसंप्रदानसंज्ञासूत्रे उपक्षिप्य व्याख्यायोदाहरणयोः सङ्गमयतु । ...९

उ०—'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञाविधायकं सूत्रम् । आप्तुमिष्यमाणमीप्सितम् । अतिशयनेप्सिततमम् । कर्तुरिति कर्तरि षष्ठी । केनाप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थाल्लभ्यते । एवञ्च–कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् इति सूत्रार्थः । तण्डुलान्पचतीत्यत्र अधिश्रयणादिरूपकर्तृव्यापारप्रयोज्यविक्लित्तिरूपफलाश्रयत्वात्तण्डुलानां कर्मत्वम् ।

'कर्मणा यमभिप्रैति स सम्प्रदानमिति' सम्प्रदानसंज्ञासूत्रम् । कर्मसंज्ञकेन गवादिद्रव्येण यमभिप्रैति भोक्तृत्वेनाध्यवस्यति स सम्प्रदानम् । सम्प्रदीयतेऽस्मै तत् सम्प्रदानमित्यन्वर्थसंज्ञैषा । ततश्च कस्याः क्रियायाः कर्मणेत्याकाङ्क्षायां दानस्येति गम्यते एवञ्च–दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् । देयद्रव्योद्देश्यसम्प्रदानमिति फलितार्थः । विप्राय गां ददातीति उदाहरणे विप्रस्य गोदानोद्देश्यत्वात्सम्प्रदानत्वम् ।

प्र० २ ।

अतिहिमम्, यूपदारु, अहोरात्रः, पञ्चाङ्गुलम्, इक्षुच्छायम्, सरसिजम्, सुप्रजाः, आम्रवणम् एषु पञ्चानां प्रयोगाणां विग्रहवाक्यानि प्रदर्श्य समासनामानि विशेषकार्याणि च निरूपयतु ।

उ०—हिमस्यात्यय इति विग्रहेऽत्ययपर्यायस्यातिशब्दस्य हिमशब्देन सह 'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभावसमासे सुपोलुकि समासविधायकसूत्रेऽव्ययस्य प्रथमानिर्दिष्टत्वादतिशब्दस्योपसर्जनत्वेन पूर्वनिपाते समुदायादुत्पन्नस्य सुपः 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यम्भावे "अतिहिमम्" इति सिध्यति ।

यूपाय दारुरिति विग्रहे यूपशब्दस्य दारुशब्देन सह 'चतुर्थी तदर्थार्थबलि०' इत्यादिना तत्पुरुषसमासे समासत्वात्प्रातिपदिकत्वे सुपोलुकि "यूपदारुरिति" निष्पन्नम् । अहश्च रात्रिश्च तयोः समाहारः इति विग्रहे द्वन्द्वसमासे 'अहःसर्वैकदेशसंख्यातत्पुण्याच्च रात्रेः' इत्यच्प्रत्यये परत्वात् 'स नपुंसकम्' इति प्राप्तं नपुंसकत्वम् अपवादत्वात्परवल्लिङ्गञ्च बाधित्वा 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे "अहोरात्रः" इति जायते ।

पञ्चाङ्गुलयो यस्येति विग्रहे बहुव्रीहौ समासे 'अङ्गुलेर्दारुणि' इति समासान्ते पचि यस्येतिचेतीकारलोपे "पञ्चाङ्गुलम्" इति जातम् ।

इक्षूणां छायेति विग्रहे षष्ठीतत्पुरुषे 'छायाबाहुल्ये' इति समासस्य नपुंसकत्वे छायाशब्दस्य 'ह्रस्वो नपुंसके' इति नपुंसकह्रस्वत्वे "इक्षुच्छायम्" ।

आम्राणां वनमिति विग्रहे षष्ठी तत्पुरुषे 'वनं पुरगामिश्रकासिध्रका'—इत्यादिना णत्वे च आम्रवणमिति ।

प्र० ३ ।

सुप्रतिना मात्रार्थे, संख्यापूर्वो द्विगुः, तत्रतेनेदमिति सरूपे, उपसर्गादध्वनः इद्वृद्धौ, कुमति च, इकः काशे, इति सूत्राणि सम्यग्व्याख्यायोदाहरणानि प्रदर्शयतु ।

उ०—मात्रालेशस्तस्मिन्नर्थे विद्यमानेन प्रतिना सुबन्तं समस्यते इति सूत्रार्थः । सुविति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम् । शाकस्य लेशः शाकप्रति इत्युदाहरणम् । मात्रार्थे किम् ? वृक्षं प्रति विद्योतते विद्युत् ।

तद्धितार्थोत्तरपदसमाहारे च, इत्यत्रोक्तस्त्रिविधः संख्यापूर्वः समासो द्विगुसंज्ञः स्यात् । पञ्चगवशब्दस्य समाहारे वाच्ये विहितसमासत्वात् द्विगुसंज्ञा स्थिता ।

तद्धितार्थे तु पञ्चसु कपालेषु संस्कृतः 'संस्कृतं भक्षाः' इत्यण् 'द्विगोर्लुगनपत्ये' इति लुक् । उत्तरपदे–पञ्चनावप्रियः 'नावो द्विगोः' इति समासान्तष्टच् ।

तत्रेत्यनेन सप्तम्यन्ते पदे विवक्षिते । ग्रहणविषये इति प्रथमाद्विवचनान्तं तद्विशेषणमध्याहार्यम् । तेन इत्यनेन तु तृतीयान्ते पदे विवक्षिते प्रहरणविषये इति प्रथमाद्विवचनान्तं तद्विशेषणमध्याहार्यम् । सरूपे इति प्रथमाद्विवचनान्ते विवक्षिते । इदमित्यर्थनिर्देशः । युद्धं प्रवृत्तमिति तद्विशेषणमध्याहार्यम् । कर्मव्यतिहारे द्योत्ये इत्यप्यध्याहार्यम् । एवञ्च सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये सच बहुव्रीहिः । केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि ।

उपसर्गात्परो योऽध्वन्शब्दस्तस्मादच्स्यादिति सूत्रार्थः । प्रगतोऽध्वानं प्राध्वो रथः ।

इद्वृद्धावित्यत्र वृद्धिशब्देन वृद्धिमल्लक्ष्यते देवताद्वन्द्वे केवलवृद्धिरूपोत्तरपदासम्भवत् । वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे । अग्निमरुतौ देवतेऽस्येति आग्निमारुतं कर्म । अग्नीवरुणौ देवतेऽस्येति आग्निवारुणम् ।

कवर्गवत्युत्तरपदे प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् । हरिकामिणौ, हरिकामाणि, हरिकामेण ।

इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । वीकाशः । नीकाशः । इकः किम् । प्रकाशः ।

प्र० ४ ।

प्राग्दीव्यतोऽण्, गोत्रेऽलुगचि, गोत्राद्यून्यस्त्रियाम्, तत्रोद्धृतममत्रेभ्य इति सूत्राणि व्याख्येयानि । १०..

उ०–'तेन दीव्यति खनति जयति जितम्' इति सूत्रस्थदीव्यतिशब्दैकदेशस्यानुकरणमिह दीव्यच्छब्दः । तेन च तद्घटितं सूत्रं लक्ष्यते । तेन दीव्यति इत्यतः प्रागणधि क्रियते इति सूत्रार्थः । यत्र प्रत्ययो विशेषोऽनिर्दिष्टस्तत्रायमुपतिष्ठते वैशेषिकेणेञादिना तु स्वविषये बाध्यते ।

गोत्रेऽलुगचि—अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक्स्यात् । गोत्राद्यून्यस्त्रियाम्—यून्यपत्ये गोत्रप्रत्ययान्तादेवापत्यप्रत्ययः स्यात् स्त्रियां

सु न युवसंज्ञा । अस्त्रियामिति योगो विभज्यते । यूनीत्यनुवर्तते । उभयमपि प्रथमया विपरिणम्यते । तथा च स्त्री उक्तयुवसंज्ञिकानेति फलति ।

तत्रोद्धृ—ससम्यन्तादमत्रवाचकशब्दादुद्धृतमित्यर्थेऽण् स्यात् । उद्धरतिश्चात्रोद्धरणपूर्वके निधाने वर्तते तेन सप्तमी ।

प्र० ५ ।

अश्वत्थामः, नाडायनः, कौरव्यः, वैयाघ्रः, श्रावणी, धैनुकम्, पौर्वशालः । एषु पञ्च रूपाणि साधनीयानि विग्रहाश्च प्रदर्शनीयाः । ...८

अश्वस्येव स्थामा स्थितिर्यस्येत्यश्वत्थामा । अश्वत्थाम्नोऽपत्यं इति विग्रहे अश्वत्थामन्शब्दात् 'स्थाम्नोऽकारः' इति वार्तिकेनाकारप्रत्यये 'नस्तद्धिते' इति टिलोपे पृषोदरादित्वात्सकारस्य तकारे च "अश्वत्थामः" इति सिद्धम् ।

श्रवणेन युक्तेति विग्रहे 'नक्षत्रेण युक्तः कालः' इत्यणि संज्ञात्वाभावात् 'संज्ञायां श्रवणाश्वत्थाभ्याम्' इत्यणो लुबभावे आदिवृद्धौ स्त्रियां 'टिड्ढाणञ्' इति ङीपि "श्रावणीति" सिद्धम् ।

पूर्वस्यां शालायां भव इति तद्धितार्थे विवक्षिते पूर्वाशालाशब्दयोः 'तद्धितार्थोत्तरपदसमाहारे च, इति समासे 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पूर्वाशब्दस्य पुंवद्भावे ततः 'दिक्पूर्वपदादसंज्ञायां ञः' इति ञप्रत्यये आदिवृद्धौ यस्येति चेत्याकारलोपे "पौर्वशालः" इति सिद्धम् ।

प्र० ६ ।

गोत्रे स्वैकोनेति कारिके व्याख्येये स्वसंस्कृतेन १२

सन् १९३०

प्र० १ ।

कर्मसंज्ञासूत्रे तमब्ग्रहणस्य फलमुक्त्वाऽकथितञ्च 'गतिबुद्धीति' सूत्रयोः सार्थसमन्वयमुदाहरणानि प्रदर्श्यानि । १२

अकथितञ्च—गां दोग्धि पयः, गोः सकाशात् पयः क्षारयतीत्यर्थः । अत्र क्षरणे गोरपादानत्वात् प्राप्तां पञ्चमीं बाधित्वा 'अकथितञ्चेति' कर्मत्वे द्वितीया । बलिं याचते वसुधाम्—बलिकर्तृकं वसुधा कर्मकं दानं प्रार्थयते इत्यर्थः । अत्र कर्तुः कर्मत्वविवक्षायां द्वितीया । यद्वा बलि संबन्धि वसुधाकर्मक यद्दानं तत्प्रार्थयते इत्यर्थः । गर्गाणां शतं दण्डयति । ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्णा-

तीत्यर्थः । ग्रहणं हि परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम् । तत्र स्वत्वविश्लेपे गर्गाणामवधित्वादपादानत्वम् । अपादानत्वमनादृत्यकर्मत्वविवक्षायां द्वितीया ।

गतिबुद्धीति—गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्त्ता स णौ कर्म स्यादितिसूत्रार्थः । 'शत्रूनगमयत्स्वर्गम्' इति गत्यर्थकस्योदाहरणम् । शत्रवः (युद्धे मृताः) स्वर्गमगच्छन् । हरिस्तान्प्रैरिरदिति हरिः शत्रून्स्वर्गमगमयत् । अत्र गमेरण्यन्तावस्थायां शत्रवो गमनक्रियां प्रति कर्त्तारः स्वर्गस्तु कर्म । ण्यन्तावस्थायान्तु णिज्वाच्यां प्रयोजकव्यापारात्मिकां शस्त्रघातक्रियां प्रति घातयिता हरिः कर्त्ता । शत्रूणान्तु गतिबुद्धीति सूत्रेण कर्मत्वम् । तेन णिज्वाश्ये शत्रुशब्दाद् द्वितीया । स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः सश्रीहरिर्भे गतिरस्तु इति वाक्यार्थः ।

प्र० २ ।

ससखि, परोक्षम्, सर्वमहान्, पूर्वकायः, द्व्यहजातः, पूर्ववैयाकरणः, कृष्णसारङ्गः, अश्वक्रीति—एषु प्रयोगेषु तत्तद्विशेषशास्त्रप्रदर्शनपूर्वकं विग्रहसमासतत्कार्याणि प्रदर्शनीयानि । ...८

उ०—सदृशः सख्येतिविग्रहे सदृशार्थकस्य सह शब्दस्य सखिशब्देन सह 'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभावसमासे समासत्वात्प्रातिपदिकत्वे सुपोलुकि· समासविधायकसूत्रेऽव्ययस्य प्रथमानिर्दिष्टत्वात्सहशब्दस्य पूर्वनिपाते 'अव्ययीभावे चाकाले' इति सह शब्दस्य सभावे ससखिशब्दस्याव्ययत्वात्तत उत्पन्नविभक्तेरव्ययादाप्सुप इति लुकि ससखि इति निष्पन्नम् ।

पूर्वं कायस्येति विग्रहे 'पूर्वापराधरोत्तरम्' इत्यादिना एकदेशिसमासे समासत्वात्प्रातिपदिकत्वे सुपोलुकि पूर्वशब्दस्य समासविधौ प्रथमानिर्दिष्टत्वात् पूर्वनिपाते 'परवल्लिङ्गम्' इति पुंस्त्वे च "पूर्वकायः" इति सिद्धम् ।

पूर्वश्चासौ वैयाकरणश्चेति विग्रहे 'पूर्वापरप्रथम—' इत्यादिना पूर्वशब्दस्य वैयाकरणशब्देन सह समासे सुब्लुकि सूत्रे पूर्वशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वेन पूर्वनिपाते पूर्ववैयाकरण इति सिद्धम् ।

कृष्णश्चासौ सारङ्गश्चेतिविग्रहे 'वर्णो वर्णेन' इति कर्मधारयसमासे सुपोलुकि समुदायात्पुनः सौ "कृष्णसारङ्गः" इति ।

अश्वेन क्रीतेति विग्रहे 'कर्तृकरणे' इति समासे "क्रीतात् करणपूर्वात्" इति ङीपि अश्वक्रीती इति सिध्यति। अत्र कर्तृकरणे इति विहितः समासः यदि क्रीत-शब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तये संख्याद्यपेक्षेत। ततः प्रागेव लिङ्गयोग-इति लिङ्गनिमित्त प्रत्ययेन टापा भाव्यमित्यदन्तत्वाभावात् 'क्रीतात्करण' इति ङीप् न स्यात अतः 'गतिकारकोपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया कृतैव सह समास इति बोध्यम्।

प्र० ३।

चित्रगुः, उपदशाः, सुप्रजाः, अधरोत्तरम्, परमकारीपगन्धी पुत्रः, सज्योतिः, कदश्वः, प्रवणः, एतेषां विग्रहादिकं प्रदर्श्य साधुत्वं ब्रूत। १०

उ०—चित्रा गावो यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहौ 'सुपो-धातु—' इति सुपो लुकि 'गोस्त्रियोः' इति गोशब्दस्य ह्रस्वत्वे "चित्रगुः" इति रूपम्।

अधराश्चोत्तराश्चेति विग्रहे द्वन्द्वसमासे 'विभाषावृक्षमृग' इत्यादिनैकद्भावे एकवद्भावस्य नपुंसकत्वान्नपुंसकह्रस्वत्वे च "अधरोत्तरम्" इति निष्पन्नम्।

समानं ज्योतिर्यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहौ समासे सुपो लुकि 'ज्योतिर्जनपदरात्रिनाभि' इत्यादिना समानस्य सभावे च "सज्योतिरिति" सिद्धम्।

कुत्सितोऽश्व इति विग्रहे 'कुगतिप्रादयः' इति समासे सुपोलुकि 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशे "कदश्वः" इति रूपम्।

प्रकृष्टं वनमिति विग्रहे 'कुगतिप्रादयः' इति प्रादिसमासे सुपोलुकि 'प्रनिरन्तः शरेक्षु' इत्यादिना वनशब्दस्य णत्वे "प्रवणमिति" सिध्यति।

४ प्र०।

ग्लुचुकायनिः, आङ्गः, कौमुदगन्ध्या, वामदेव्यम्, शतरुद्रीयम्, सौमेन्द्रः वन्या, त्रैविद्यः, एते प्रयोगाः साधुसाधनियाः। ...१०

ग्लुचुकस्य गोत्रापत्यमिति विग्रहे 'प्राचामवृद्धात् फिन्बहुलम्' इति फिन्प्रत्यये आयन्नादेशे "ग्लुचुकायनिः" इति रूपम्।

अङ्गस्यापत्यं राजा वे ( अङ्गशब्दो देशक्षत्रियवचनः ) ति विग्रहेऽङ्गशब्दात् 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इत्यणि तद्धितेष्वचामादेरित्यादिवृद्धौ यस्येति चेत्यकारलोपे "आङ्गः" इति सिद्धम्।

कुमुदगन्ध इव गन्धो यस्येति विग्रहे 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यः उत्तरपदलोपश्च' इति बहुव्रीहौ समासे, पूर्वखण्डे उत्तरपदस्य गन्धशब्दस्य लोपे 'उपमानाच्च' समासान्ते इत्वे कुमुदगन्धिः। कुमुदगन्धेरपत्यं स्त्रीति विग्रहे तस्यापत्यमित्यण् यस्येतिचेत्यकारलोपे, आदिवृद्धौ कौमुदगन्धशब्दः। तदवयवस्याणः 'अणिञोरनार्षे' इत्यादिना ष्यङादेशे यङश्चाप् इति चापि "कौमुदगन्ध्या" शब्दः सिध्यति।

सोमश्चेन्द्रश्च सोमेन्द्रौ, तौ देवतेऽस्येति विग्रहे 'सास्यदेवता' इत्यणि 'देवताद्वन्द्वे च' इति प्राप्ताया उभयपदवृद्धेः 'नेन्द्रस्य परस्य' इति इन्द्रशब्दस्य निषेधे तद्धितेष्विरत्यादिवृद्धौ यस्येति चेत्यकारलोपे 'सौमेन्द्रः' इति सिद्धम्।

वनानां समूह इति विग्रहे समुहार्थे 'पाशादिभ्यो यः' इति यप्रत्यये यस्येति चेत्यकारलोपे टापि "वन्येति" रूपम्। स्त्रीत्वं लोकात्।

त्रिविधा विद्या त्रिविद्या (शाकपार्थिवादित्वाद्विधाशब्दस्य लोपः) तामधीते वेद वेति विग्रहे 'विद्यालक्षणकल्पान्ताच्चेति' वक्तव्यमिति प्राप्तस्य ठकः 'अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्' इति निषेधे 'तदधीते तद्वेद' इत्यणि आदिवृद्धौ यस्येतिचेत्याकारलोपे "त्रैविद्यः" इति रूपम्।

प्र० ५।

तस्येदमित्यपत्येऽपीति कारिका व्याख्यायताम्... ८

सन् १९३१

प्र० १।

मासमासयति देवदत्तम्, अपिस्तुहि, मातुर्निलीयते कृष्णः, कृष्णस्य कृतिः, अधीती व्याकरणे, अधिभुवि रामः। एषु ससमन्वयं विशेषशास्त्राणि प्रदर्श्यानि १०

अपि स्तुहीत्यत्रापिशब्दस्य 'अपिः पदार्थसम्भावना' इत्यादिना समुच्चये कर्मप्रवचनीयसंज्ञायामुपसर्गसंज्ञाबाधात् 'उपसर्गात्सुनोति—'इत्यादिना षत्वाभावः।

मातुर्निलीयते कृष्णः—इत्यत्र व्यवधानमाश्रित्य मातृकर्तृकस्वविषयकदर्शनविरहस्य कृष्णेनेष्यमाणतया 'अन्तर्धौ येनादर्शनमिच्छति' इति सूत्रेण मातुरपादानत्वात्पञ्चमी।

कृष्णस्य कृतिः—इत्यत्र भावे क्तिन्। कृष्णकर्तृका सृष्टिरित्यर्थः। एवञ्च कृतिरिति कृद्योगे कृष्णशब्दात् 'कर्तृकर्मणोः कृतिः' इति षष्ठी।

अधि भुवि रामः—इत्यत्राधिशब्द ईश्वरपर्यायः। सम्बन्धः सप्तम्यर्थः। भुवः स्वामी राम इत्यर्थः। अत्र 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' इति स्ववाचकाद्भूशब्दात्सप्तमी।

प्र० २।

गुडसंमिश्रा धानाः, द्वयहजातः, पञ्चगवधनः, गोधेनुः, चित्राजरतीगुः, उपदशाः एतेषु विग्रहप्रदर्शनपूर्वकं विशेषशास्त्राणि तत्कार्याणि च प्रदर्शनीयानि ... १०

गुडेन (संमिश्रा) धाना इति विग्रहे 'भक्ष्येण मिश्रीकरणम्' इति सूत्रेण गुडशब्दस्य धनाशब्देन सह समासे सुपोलुकि समासविधायकसूत्रे मिश्रीकरणमित्यस्य प्रथमान्तत्वादुपसर्जनसंज्ञायां पूर्वनिपाते गुडधाना इति रूपम्।

धेनुश्चासौ गौश्चेति विग्रहे 'पोटायुवति' इत्यादिना कर्मधारयसमासे सुब्लुकि गोशब्दस्य जातिवाचकत्वात्पूर्वनिपाते "गोधेनुरिति" सिद्धम्।

चित्रा जरतीगौर्यस्येति विग्रहे 'अनेकमन्यपदार्थे' इतिसूत्रेऽनेकोक्तेः त्र्याणामपि पदानां बहुव्रीहौ समासे 'सप्तमीविशेषणे बहुव्रीहौ' इति चित्राशब्दस्य पूर्वनिपाते (जरतीशब्दस्यापि विशेषणत्वात् पूर्वनिपातोभवत्येव तथा च जरतीचित्रागुरिति रूपान्तरम्) गोस्त्रियोरिति ह्रस्वत्वे "चित्राजरतीगुः"। अत्र 'स्त्रियाः पुंवत्' इति सूत्रेण मध्यमेन जरतीशब्देन व्यवधानात् उत्तरपदत्वाभावात् चित्राशब्दस्य न पुंवत्। नापि जरतीशब्दस्य, उत्तरपदेन पूर्वपदस्याक्षेपात् जरतीशब्दस्य च पूर्वपदत्वाभावात्, पूर्वपदस्य शब्दस्य प्रथमावयव एव रूढत्वात्।

प्र० ३।

वाङ्मनसे, दृषदिमापकः, कौमुदगन्धीपुत्रः, कत्त्रयः, वीकाशः, चतुरङ्गयोगेन, एते प्रयोगाः साधनीयाः। ८

उ०—वाक्च मनश्चेति विग्रहे प्राण्यङ्गत्वात् प्राप्तस्य नित्यमेकत्वस्य 'न दधिपय आदीनि' इति निषेधे नेतरेतरयोगद्वन्द्वे 'अचतुरविचतुर' इत्यादिना समासान्तेऽच्प्रत्यये तदन्तात् प्रथमाद्विवचने "वाङ्मनसे" इति रूपम्।

दृषदि मापक इति विग्रहे सप्तमीतत्पुरुषे 'सुपो धातु' इति प्राप्तस्य सप्तम्या लुकः 'कारनाम्नि च प्राचां हलादौ' इति निषेधे "दृषदिमापकः" इति रूपम्।

कुमुदगन्ध इव गन्धो यस्य सः कुमुदगन्धिः 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्योवाचोत्तरपदलोपः' इति बहुव्रीहौ कुमुदगन्धशब्दे पूर्वखण्डे उत्तरस्य गन्धश-

ब्दस्य लोपश्च 'उपमानाच्च' इतीत्वम् । कुमुदगन्धेरपत्यं स्त्री इत्यर्थे 'तस्यापत्यम्' इत्यण् । 'अणिञोरनार्षयोः' इति ष्यङादेशः 'यस्येति च' इतीकारलोपः । आदिवृद्धौ यङश्चाप् । एवं कौमुदगन्ध्याशब्दो निष्पन्नः । कौमुदगन्ध्यायाः पुत्रः इति विग्रहे षष्ठीसमासे सुब्लुकि कौमुदगन्ध्या पुत्र इति स्थिते 'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे' इति ष्यङः सम्प्रसारणेन यकारस्येकारे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'सम्प्रसारणस्य' इति दीर्घे च "कौमुदगन्धीपुत्रः" इति रूपम् ।

कुत्सितास्त्रय इति विग्रहे 'कुगतिप्रादयः' इति समासे सुब्लुकि 'त्रौ च' इति वार्तिकेन कुशब्दस्य कदादेशे "कत्त्रयः" इति रूपम् ।

विपूर्वात्काशतेः पचाद्यचि प्रादिसमासे 'इकः काशे' इति विशब्दस्य दीर्घे "वीकाशः" इति रूपम् ।

चत्वार्यङ्गानि यस्य तत् चतुरङ्गं सैन्यम् । तेन योग इति चतुरङ्गयोगस्तेन । अत्र निमित्तिकार्यिणोरङ्गपदेन व्यवधानात् 'पदव्यवायेऽपि' इति णत्वनिषेधः । प्रत्ययलक्षणेनान्तर्वर्तिनीं विभक्तिमाश्रित्याङ्गशब्दस्य पदत्वम् । 'उत्तरपदत्वेचापदादिविधौ' इति निषेधस्तु नात्र प्रवर्तते । उत्तरपदरूपस्य कार्यभाक्त्वे सत्येव तत्प्रवृत्तेः ।

प्र० ४ ।

गोत्रेस्वेकोनेति कारिके स्पष्टं व्याख्येये । ... १४

प्र० ५ ।

द्वैमातुरः, गौधेरः, ब्राह्मं हविः, अष्टाकपालः, सौमी, दैल्वकाः । एते प्रयोगा विग्रहप्रदर्शनपूर्वकं साधनीयाः ।

उ०—द्वयोर्मात्रोरपत्यमितिविग्रहे द्विमातृशब्दात् 'मातुरुत्संख्यासंभद्रपूर्वायाः' इत्यणि मातृशब्दस्योकारान्तादेशे रपरत्वे तद्धित इत्यादिवृद्धौ "द्वैमातुरः" इति रूपम् ।

अष्टसु कपालेषु संस्कृतः इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति तद्धितार्थे विषये समासे सुब्लुकि 'संस्कृतं भक्षाः' इत्यणि तस्य 'द्विगोर्लुगनपत्ये' इति लुकि 'अष्टनः कपाले हविषि' इत्यष्टन्शब्दस्याकारान्तादेशे "अष्टाकपालः" इति रूपम् ।

सोमो देवता अस्या (ऋचः) इति विग्रहे सोमशब्दात् 'सोमाट्ट्यण्' इति ट्यण् प्रत्यये णित्वादादिवृद्धौ टित्वान्ङीपि 'हलस्तद्धितस्य' इति यलोपे "सौमी" इति रूपम् ।

विल्वा यस्यां सन्तीति विग्रहे विल्वशब्दात् 'नडादीनाङ्कुक् च' इति छप्रत्यये प्रकृतेः कुगागमे च विल्वकीया इति रूपम् । विल्वकीयायां भवा इति विग्रहे च भवार्थेऽणि 'विल्वकादिभ्यश्छस्य लुक्' इति छकारस्य लुकि "वैल्वकाः" इति सिध्यति ।

१६३४

१ प्रश्नः—हे राम, वलिं याचते वसुधाम्, पित्रा सञ्जानीते, पापाद् विरमति, मातुः स्मरणम् । एतान्प्रसाध्य करणसंज्ञासूत्रे तमवूग्रहणप्रयोजनं भण । १२

उत्तरम्—हे राम मां पाहीति शेषः । अत्र संबोधने चेति प्रथमा । एकवचने च सौ एङ्ह्रस्वात्संबुद्धेः तल्लुकि उक्तं रूपम् ।

वलिं याचते वसुधाम्—६ पृष्ठे द्रष्टव्यम् ।

पित्रा सञ्जानीते—अत्र 'सञ्ज्ञोऽन्यतरस्याम्' इति जानातेः णि पितरि तृतीया । 'सम्प्रतिभ्यामनाध्याने' इत्यनेन चात्मनेपदम् ।

पापाद् विरमति—पापविषये न प्रवर्तत इत्यर्थः । अत्र 'जुगुप्साविरामप्रमादार्थाना मुपसंख्यानम्' इति वार्तिकेन पापस्यापादानसंज्ञायाम् 'अपादाने पञ्चमी' इति पञ्चमी ।

मातुः स्मरणम्—२४पृष्ठे द्रष्टव्यम् ।

२ प्र०—अधिगोपम्, उपशरदम्, कृष्णश्रितः, पूर्वकायः, एतान्प्रसाधय । ६

उ०—अधिगोपम्—४९ पृष्ठे द्रष्टव्यम् ।

उपशरदम्—शरदः समीपमितिविग्रहे समीपार्थकस्य उपेत्यव्ययस्य शरद इति षष्ठ्यन्तेन 'अव्ययं विभक्ति' इत्यादीनाऽव्ययीभावसमासे समासत्वात्प्रातिपदिकसंज्ञायां 'सुपो धातु'रिति सुपो लुकि 'प्रथमा निर्दिष्टम्' इति उपेत्यस्योपसर्जनसंज्ञायां पूर्वनिपाते 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्ते टचि समासान्तात्सौ । सोःटचस्समासावयवत्वेन तदन्तस्याव्ययीभावसमासत्वात् 'नाव्ययीभावात्' इत्यमि उपशरदमिति सिध्यति ।

कृष्णश्रितः—कृष्णं श्रित इति विग्रहे कृष्ण अम् श्रित सु इत्यलौकिकविग्रहे च 'द्वितीया श्रितातीत' इत्यादिना तत्पुरुषे समासे समासत्वात्प्रातिपदिकसञ्ज्ञायां 'सुपो धातुः' इति सुपो लुकि द्वितीयान्तस्य कृष्णस्योपसर्जनसञ्ज्ञात्वेन पूर्वनिपाते समासात्पुनः सोरुत्पत्तौ रुत्वविसर्गयोश्चोक्तं रूपं जायते ।

**पूर्वकायः**—पूर्वं कायस्येति विग्रहे पूर्व अम् काय ङस् इत्यलौकिकवाक्येच 'पूर्वपराधरोत्तम्' इत्यादिना समासे समासत्वात्प्रातिपदिकसंज्ञायां 'सुपोधातुः' इति सुपो लुकि पूर्वशब्दस्य समासविधायकसूत्रे प्रथमानिर्दिष्टत्वादुपसर्जनत्वेन पूर्वनिपाते समासात्पुनर्विभक्तिकार्ये पूर्वकाय इति सिद्धम् ।

३ प्र०—चित्रगुः, उपदशाः, पाणिपादम्, हंसौ, विष्णुपुरम्, स्त्रीपुंसौ, अप्सुयोनिः, ब्राह्मणितरा । एषु विशेषकार्यं प्रदर्शय ।

**चित्रगुः**—चित्रा गावो यस्येतिविग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे समासत्वेन प्रातिपदिकसंज्ञायां विभक्तिलुकि 'स्त्रियाः पुंवत्' इति चित्राशब्दस्य पुंवत्वे अनेकमिति प्रथमान्तनिर्दिष्टतया उपसर्जनत्वे सति चित्रगोशब्दे ओकारस्य 'गोस्त्रियोः' इति ह्रस्वे विभक्तिकार्ये च निर्दिष्टं रूपं सिद्धयति ।

**उपदशाः**—दशानां समीपे ये सन्ति ते, अत्र समीपवर्तिनि वर्तमानस्योपशब्दस्य षष्ठयन्तेन दशशब्देन सह 'संख्ययाव्ययां' इत्यादिना समासे सुब्लुकि 'बहुव्रीहौ संख्येये' इति समासान्ते डचि 'नस्तद्धित' इति टिलोपे विभक्तिकार्येचोक्तं रूपं निष्पद्यते ।

**पाणिपादम्**—पाण्योश्च पादयोश्च समाहार इति विग्रहे 'चार्थेद्वन्द्वः' इति द्वन्द्व समासे सुब्लुकि 'द्वन्द्वश्च प्राणि' इति द्वन्द्वसमासस्य एकवद्भावे 'स नपुंसकम्' इति समाहारस्य नपुंसकत्वे विभक्तिकार्ये पाणिपादम् इति जातम् ।

**हंसौ**—हंसी च हंसश्चेति विग्रहे पुंस्त्वस्त्रीत्वमात्रकृतवैरूप्यात् 'पुमान् स्त्रिया' इत्यनेन पुल्लिङ्गस्य हंसशब्दस्य शेषे ततो विभक्तिकार्ये हंसौ इति जायते ।

**विष्णुपुरम्**—विष्णोः पूरिति विग्रहे षष्ठीसमासे 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तः अप्रत्ययः । यद्यप्यत्र पूःशब्दस्य स्त्रीत्वात् 'परवल्लिङ्गम्' इति समासस्य स्त्रीत्वेन भाव्यं तथापि लोकात् क्लीवत्वं द्रष्टव्यम् ।

**स्त्रीपुंसम्**—

**अप्सुयोनिः**—अप्सु योनिरुत्पत्तिर्यस्येतिविग्रहे सप्तमीसमासे 'अपो योनियन्मतुषु' इति सप्तम्या अलुकि उक्तं रूपम् ।

**ब्राह्मणितरा**—अतिशयिता ब्राह्मणीति विग्रहे ब्राह्मणीशब्दात् तरप्प्रत्यये 'घरूप' इत्यादिना ब्राह्मणीशब्दस्य ह्रस्वत्वम् । 'जातेश्च' इति निषेधात् 'तसिलादिषु' इति न पुंवद्भावः ।

४ प्र०—वैयासकिः, द्वैमातुरः, रैवतिकः, कौरव्याः, लाक्षिकः, द्यावापृथिव्यम्, कौशाम्बी, कुमुद्वान् । एषु विग्रहसहितं सूत्रोपन्याससहितप्रत्ययान् लिख १०

उ०—वैयासकिः—व्यासस्यापत्यमितिविग्रहे व्यासशब्दात् 'अतइञ्' इति इञ्प्रत्ययः 'व्यासवरुडनिषाद-' इत्यादिवार्तिकेन प्रकृतेरकङादेशश्च । ( अत्र पदान्तात् यकारात् पर्जन्यवल्लक्षणप्रवृत्त्या आकारस्य प्राप्तां वृद्धिं निषिध्य 'नय्वाभ्यां पदान्ताभ्याम्' इत्यादिना यकारात्पूर्वम् ऐकारागमः )

द्वैमातुरः—द्वयोर्मात्रोरपत्यमितिविग्रहे 'तद्धितार्थ' इति समासे द्विमातृशब्दात् 'मातुरुत्संख्या' इति अण्प्रत्ययः ऋकारस्योकारः रपरत्वञ्च ।

रैवतिकः—रेवत्या अपत्यमितिविग्रहे रेवतीशब्दात् 'रेवत्यादिभ्यष्ठक्' इति ठक्प्रत्ययः । ( ठस्येकः इति इकादेशे 'किति च' इति आदिवृद्धिः )

कौरव्याः—कुरुर्नामकश्चिद्ब्राह्मणः तस्यापत्यानीतिविग्रहे 'कुर्वादिभ्योण्यः' इति ण्यप्रत्यये कुरु य इति स्थिते ओर्गुणे अवादेशे आदिवृद्धौ रूपमिदम् ।

लाक्षिकः—लाक्षया रक्त इति विग्रहे लाक्षाशब्दात् 'लाक्षारोचनाट्ठक्' इति ठक्प्रत्ययः । तत्र ठस्येकादेशे 'यस्येति च' इत्याकारलोपे च उक्तंरूपम् ।

द्यावापृथिव्यम्—द्यावापृथिवी देवता अस्येतिविग्रहे 'द्यावापृथिवीशुनासीर' इत्यादिना यत्प्रत्ययः तत्र 'यस्येति च' इतीकारलोपे रूपम् ।

कौशाम्बी—कुशाम्बेन निर्वृत्ता (नगरी) इति विग्रहे कुशाम्बशब्दात् 'तेननिर्वृत्तम्' इत्यनेन अण्प्रत्ययः । तत्रादिवृद्धौ 'टिड्ढाणञ्-' इत्यादिना ङीपि चोक्तं रूपम् ।

कुमुद्वान्—कुमुदाः अस्मिन् सन्तीतिविग्रहे कुमुदशब्दत् 'कुमुदनडवेतसेभ्यो ड्मतुप्' इत्यनेन ड्मतुप् प्रत्ययः । तत्र डित्वात् टिलोपे 'झयः' इति मकारस्यवकारे चोक्तं रूपम् ।

५प्र०—'द्व्यह्ना' इत्यत्र ङोपमाशङ्क्य परिहारः ।

(ख) गर्गभगिनी' इत्यत्र णत्वं वारणीयम् ।

(ग) 'औपगवः' इत्यत्रान्त्यवृद्धिर्वारणीया ।

उ—(क) द्वयोरह्नोर्भव इत्यर्थे 'कालाट्ठञ्' इति विहितस्य ठञो 'द्विगोः लुंगनपत्ये' इति लुकि स्त्रियामदन्तत्वाद्टापि उक्तंरूपम् । अत्र ठञन्तत्वात् 'टिड्ढाण' इत्यादिना प्राप्तो ङीप् न भवति ठञो लुप्तत्वात् । वर्णाश्रयत्वाच्च 'वर्णाश्रयेनास्ति प्रत्ययलक्षणम्' इति परिभाषया प्रत्ययलक्षणप्रतिषेधात्प्रत्ययलक्षणमपि न । ठञन्त-

त्वादपि ङीब्न भवति टचः समासान्ततया तदन्तस्य तद्धितार्थे प्रत्युपसर्जनत्वात्। 'द्विगोः' इति प्राप्तस्तु ङीप् 'अपरिमाण–' इत्यादिना प्रतिषिध्यते अतष्टावेवात्रयुक्तः।

(ख) गर्गभगिनीत्यत्र णत्ववारणप्रकारो १४ पृष्ठे द्रष्टव्यः।

(ग) औपगव इत्यत्र यद्यपि आदिवृद्धौ सत्यामपि 'अचोऽञ्णिति' इत्यन्त-वृद्धिः प्राप्नोति देशभेदेनोभयोरपि सम्भवाद्विप्रतिषेधाभावात् बाध्यबाधकाभावात्' तथापि अनुशतिकादिषु पौष्करसादिरित्यस्य पाठात् 'सत्यपि सम्भवे बाधनं भवति इति न्यायस्य ज्ञाप्यत्वेनादिवृद्धिरन्त्यवृद्धिमुपधावृद्धिं च बाधते अन्यथा आदिवृध्या उपधा वृद्धया च पौष्करसादेः सिद्धत्वात् अनुशतिकादौ पुष्करसच्छब्दपाठोऽ-नर्थकः स्यात्।

---

१९३५

## व्याकरणमध्यमपरीक्षायाम्

### २ य वर्षे १ म पत्रम्

१ प्र०—नाययति वाहयति वा भारं भृत्येन, अतिदेवान् कृष्णः, पशुना रुद्रं यजते, ज्ञानेन निमित्तेन हरिः सेव्यः, प्रसित उत्सुको वा हरिणा हरौ वा। एषु विभक्तीः सूत्रोपन्यासेन साधय। १०

उ०—नाययति वाहयतिवा भारं भृत्येन—अत्र प्रयोज्यकर्तुर्भृत्यस्य णिचप्र-कृत्यर्थन्नयनं प्रति कर्तुः प्रयोजकव्यापारं प्रति 'गतिबुद्धि–' इत्यादिना प्राप्तस्य कर्मत्वस्य 'नीवह्योर्न'। इति प्रतिषेधे कृते णिचप्रकृत्यर्थं प्रति कर्तृत्वस्यैवस्थानात् तस्यचानुक्तत्वात् तृतीया।

अतिदेवान् कृष्णः—लोकसंरक्षण विषये देवेभ्योऽधिकः कृष्ण इत्यर्थः। देवानां पूज्य इति वार्थः। अत्र 'अतिरतिक्रमणे च। इत्यनेन अतेः कर्मप्रवचनीय-त्वात् 'कर्मप्रवचनीययुक्ते'–इति द्वितीया।

पशुनेति—अत्र 'पशुं रुद्राय ददाती' त्यर्थे 'कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा' इति वार्तिकेन कर्मणः पशोः करणसंज्ञायां सम्प्रदानस्य रुद्रस्य च कर्मसंज्ञायां क्रमेण तृतीयाद्वितीये भवतः।

ज्ञानेनेति—'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्'। इति वार्तिकेन सर्व-विभक्तीनां सामान्यतो विधानेऽपि प्रायग्रहणात् असर्वनाम्नः प्रथमा द्वितीये न भ-

वतः, तेनात्र तृतीयादयो भवन्ति ।

प्रसित इति—अत्र 'प्रसितोत्सुकाभ्यां तृतीया च' इत्यनेन तृतीयासप्तम्यौ ।

२ प्र०—उपशरदम्, दध्योदनः, पुराणमीमांसकाः, दत्ताभार्यः, शुकवकम्, एषां विग्रहवाक्यानि प्रदर्श्य सिद्धिप्रकारं लिख ।

उ०—उपशरदम् ७२ पृष्ठे द्रष्टव्यम् ।

दध्योदनः—दध्ना (उपसिक्त) ओदनः इति विग्रहे दधि टा ओदन सु इत्यलौकिक विग्रहे च 'अन्नेन व्यञ्जनम् । इति तत्पुरुषे समासे समासत्वात्प्रातिपदिकत्वे 'सुपो धातु—' इति विभक्तिलुकि यणादेशे पुनः विभक्तिकार्येचोक्तं रूपम् ।

पुराणमीमांसकाः—पुराणाश्च ते मीमांसकाश्चेतिविग्रहे पुराण जस् मीमांसक जस् इत्यलौकिकविग्रहे च 'पुराणनवकेवलाः—' इति समासे समासत्वात्प्रातिपदिकत्वे विभक्तिलुकि प्रातिपदिकत्वादेव पुनर्जसि विभक्तिकार्येचेदं रूपं जायते ।

दत्ताभार्यः—दत्ता भार्या यस्मै इति विग्रहे 'अनेकम्' इति बहुव्रीहिसमासे समासत्वात्प्रातिपदिकत्वे विभक्तिलुकि पूर्वपदस्य 'स्त्रियाः पुंवत्–' इति प्राप्तस्य पुंवद्भावस्य 'संज्ञापूरण्योश्च' इति निषेधे उत्तरपदस्य 'गोस्त्रियोः–' इत्युपसर्जनह्रस्वत्वे ततः सौ विभक्ति कार्येच रूपमिदं जायते ।

शुकवकम—शुकाश्च वकाश्चेतिविग्रहे शुकजस् वकजस् इत्यलौकिकविग्रहे च 'चार्थे द्वन्द्वः' इति द्वन्द्वसमासे समासत्वात्प्रातिपदिकत्वे विभक्तिलुकि 'विभाषा वृक्षमृग–' इत्यादिना समासस्य पाक्षिके एकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे च प्रातिपदिकत्वात्सौ 'अतोऽम्' इति सोरमि पूर्वरूपे चोक्तं रूपं निष्पद्यते ।

३ प्र०—हस्तिवर्चसम्, गुप्तिबन्धः, रुरव इमे, शिरोपवनम्, कद्न्नम्, एषु विशेषकार्याणि लिख ।

उ०—हस्तिवर्चसम्—हस्तिनो वर्च इति विग्रहे षष्ठीतत्पुरुषे विभक्तिलुकि 'ब्रह्महस्तिभ्यां वर्चसः' इति समासान्तेऽच्प्रत्यये विभक्तिकार्ये चेदं रूपं जायते ।

गुप्तिबन्धः—गुप्तौ बन्ध इति विग्रहे सप्तमीसमासे 'बन्धेच विभाषा' इतिसूत्रे हलदन्तानुवृत्त्या विभक्तेरलुक्प्रवृत्त्यभावाल्लुकि विभक्तिकार्येचे रूपं निष्पन्नम् ।

रुरव इमे—रुरवश्च (इमे) रुरवश्च (इमाः) इति विग्रहे रुरूणामग्राम्यपशुत्वात् 'ग्राम्य–' इत्यस्याप्रवृत्त्या 'पुमान् स्त्रिया:' इति पुंसः शेषे स्त्रियाश्च लोपे ततो जसि रुरव इति सिद्ध्यति । अत्र पुंसः शेषत्वसूचनाय इमे । इत्यस्यानुप्रयोगः ।

शिरीषवनम्—अत्र शिरीषाणां 'वनमितिविग्रहे 'षष्ठीसमासे विभक्तिलुकि 'विभाषौषधिवनस्पतिभ्यः' इति वनशब्दस्य विहितस्य णत्वस्य पाक्षिकत्वात्तदभावः।

कदन्नम्—कुत्सितमन्नमितिविग्रहे 'कुगति–' इति समासे विभक्ति लुकि 'कोः कत्तत्पुरुषेऽचि' इति कोः कदादेशे विभक्तिकार्ये च रूपमिदम् ।

४ प्र०

—पान्नागारिः, दौहित्रः, कौरव्याः, श्रावणी, उषस्यम्, एषु के प्रत्ययाः केन केन सूत्रेण कुत्रचार्थे इति सविशेषं निरूपय ।

उ०—पान्नागारिः—अत्र पन्नागारस्य गोत्रापत्ये युवापत्येच पान्नागारिरित्येव रूपम् । तत्र गोत्रापत्ये 'अतइञ्' इति इञ् । युवापत्ये तु पान्नागारिशब्दात् 'यञिञोश्च' इति फक् तस्य च 'इञः प्राचाम्' इति लुक् । एवञ्चार्थद्वययोरपि समानमेव ।

दौहित्रः—अत्र दुहितुरनन्तरापत्यमित्यर्थे बाह्वादेराकृतिगणत्वात् 'बाह्वादिभ्यश्च' इति इञ् ।

कौरव्याः—६० पृष्ठे द्रष्टव्यम् ।

श्रावणी—श्रवणेन युक्ता पौर्णमासी इत्यर्थे 'नक्षत्रेण युक्तः कालः' इत्यनेन विहितस्य अणो 'विभाषाफाल्गुनी–' इति निपातनाल्लुपा भाव्यं यद्यपि तथापि 'अबाधकान्यपि निपातनानि भवन्ति' इति परिभाषया लुगभावे आदिवृद्धौ अणन्तत्वान्ङीप् ।

उषस्यम्—उषः देवता अस्येत्यर्थे उषश्शब्दात् 'वाय्वृतुपित्रुषसो यत्' इति यत्प्रत्ययः ।

५ प्र०

( क ) अकृतव्यूहपरिभाषया सावुत्थितिर्माभूत् ।

( ख ) उपसर्जने तु तदादिनियमान्नेह ।

( ग ) तमपूग्रहणं किम् गंगायां घोषः ।

अत्र द्वयोराशयं वर्णय ।

उ० ( क ) सौत्थितिरित्यत्र सु शोभन उत्थितः सूत्थितः । प्रादिसमासे सवर्णदीर्घः । सूत्थितस्यापत्यं सौत्थितिः । अत इञ्, सुब्लुक्, आदिवृद्धिः, 'यस्येतिच' इत्यकारलोपः । तस्यापत्यमितिसूत्रे कृतसन्धेरित्यस्याभावे सु उत्थित

इत्यस्यामेव दशायां सवर्णदीर्घात्परत्वादादिवृद्धौ कृतायामावादेशे सावुत्थितिरिति स्यात्। नन्वत्रान्तरङ्गत्वात्सवर्णदीर्घे कृते तदुत्तरमेव इञ्प्रत्ययः उचितः। परादन्तरङ्गस्य बलवत्त्वात्। ततश्च सन्धेः प्राक् तद्धितोत्पत्तेरप्रसक्तेः कृतसन्धेरिति व्यर्थमेवेत्यत आह–अकृतेति अन्तरङ्गपरिभाषाया अप्यपवादभूतया अकृतव्यूहपरिभाषया सन्धेः प्रागेव प्रत्ययः स्यात्। ततश्चादिवृद्ध्यपेक्षयाऽन्तरङ्गोऽपि सवर्णदीर्घः अकृतव्यूहपरिभाषया अदिवृद्धेः प्राक् न प्रवर्तते। एवञ्च सवर्णदीर्घात्प्रागेवादिवृद्धौ आवादेशे सावुत्थितिरिति स्यादित्यर्थः।

( ख ) उपसर्जनेत्विति—कारीषगन्ध्यामतिक्रान्तः अतिकारीषगन्ध्यः, 'अत्यादयः–' इति समासे उपसर्जनह्रस्वः। तस्य पुत्रः अतिकारीषगन्ध्यापुत्रः। अत्र स्त्रीप्रत्यये तदादि नियमो न' इति निषेधो न भवति, अनुपर्जन एव स्त्रीप्रत्यये तत्प्रवृत्तेः। ष्यङ्न्त्वयं स्त्रीप्रत्ययोऽत्र उपसर्जन एव। अतस्तत्र तदादिनियमसत्वात अतिकारीषगन्ध्याशब्दो नैव ष्यङन्त इति न सम्प्रसारणमिति भावः।

( ग ) तमब्ग्रहणं किम् ? अस्योत्तरं १० पृष्ठे द्रष्टव्यम्।

---

१९३६

## व्याकरणमध्यम परीक्षायाम्

### २ यवर्षे १ मपत्रम्।

१ प्र० उपवसति वैकुण्ठम्, वने उपवसति, अतिदेवान् कृष्णः अक्षैरक्षान्वा दीव्यति, पत्ये शेते, दक्षिणा ग्रामात्, अधीती व्याकरणे, एषु दर्शितविभक्तीर्वचनैः संसाध्य दूरार्थक शब्दयोगे कति विभक्तयो जायन्ते काश्च तत्रोपपत्तयः इत्यभिधीयताम्। ...१०

उ०—उपवसति वैकुण्ठम्—अत्र 'उपान्वध्याङ्वसः' इत्यनेन वसतेराधारस्य वैकुण्ठस्य कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीया।

वने उपवसति—४४ पृष्ठे द्रष्टव्यम्।

अतिदेवान्कृष्णः—४७ पृष्ठे द्रष्टव्यम्।

अक्षैरक्षान्वा दीव्यति—अत्र 'दिवः कर्म च' इत्यनेन दिवः साधकतमस्याक्षस्य कर्मसंज्ञायां द्वितीया करणसञ्ज्ञायाञ्च तृतीया।

पत्ये शेते—अत्र 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' इति वार्तिकेन शयनक्रियोद्देश्यस्य पत्युः सम्प्रदानत्वे चतुर्थी।

**दक्षिणा ग्रामात्**—अत्र आच्प्रत्ययान्तस्य दक्षिणाशब्दस्ययोगे ग्रामादित्यत्र 'अन्यारादितर–' इत्यादिना पञ्चमी ।

**अधीती व्याकरणे**—अत्र भावक्तान्तादधीतशब्दात् कर्तरीनिप्रत्यये अधीतीशब्दो निष्पन्नः । अधीतवानितितदर्थः । तस्य कर्मभूते व्याकरणे 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति वार्तिकेन सप्तमी ।

**दूरार्थकेति**—दूरार्थक शब्दयोगे 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति सूत्रेण षष्ठीपञ्चम्यौ भवतः । अत्र षष्ठी कण्ठतः उक्तैव पञ्चमी तु समुच्चयार्थकेन अन्य तरस्यामिति पदेन समुच्चीयते । व्याख्यानाच्च सन्निहिते अपि द्वितीया तृतीयेन समुच्चीयतेऽपि विप्रकृष्टापि पञ्चमी समुच्चीयते ।

२ प्र० तमद्ग्रहणं किम् गङ्गायां घोष इति पङ्क्तिका व्याख्यायताम् ।···१०

उ०—अस्योत्तरं १३ पृष्ठे द्रष्टव्यम् ।

३ प्र०—षण्णां मातॄणामपत्यम्, पञ्च गावो धनं यस्य, नावोऽर्धम्, पञ्चानां तक्ष्णां समाहारः, कुक्कुट्या अण्डम्, इति दर्शितविग्रह निष्पन्नरूपाणि वचनैः साध्यन्ताम् ।

उ०—षण्णां मातॄणामपत्यमितिविग्रहे 'षाण्मातुरः' इति रूपं जायते । तत्र* षण्मातृशब्दात् 'मातुरुत्संख्यासंभद्रपूर्वायाः, । इत्यणि ऋकारस्योकारे रपरत्वे 'तद्धितेष्वचामादेः, । इत्यादिवृद्धौ तद्धितान्तत्वात्प्रातिपदिकत्वे विभक्तिकार्ये उक्तं रूपम् ।

पञ्च गावो धनं यस्येति विग्रहे 'पञ्चगवधनः' इति रूपं निष्पद्यते । अत्र दर्शित विग्रहे त्रिपदे बहुव्रीहौ पञ्चगोशब्दयोः 'तद्धितार्थोत्तरपदसमाहारे च' इति अवान्तरतत्पुरुषे समासत्वात्सुपोधातुरिति विभक्ति लुकि 'गोरतद्धितलुकि' इति टचि अचादेशे उक्तं रूपं जायते ।

नावोऽर्धमिति विग्रहे अर्धनावम् इति रूपम् । अत्रोपदर्शितविग्रहे 'अर्धं नपुंसकम्' इत्येकदेशिसमासे समासत्वात्प्रातिपदिकत्वेन 'सुपोधातुः' इति विभक्तिलुकि समासविधायकसूत्रे ऽर्धशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनसञ्ज्ञायां पूर्वनिपाते च 'अर्धाच्च' इति समासान्ते टचि अवादेशे विभक्तिकार्येचोक्तं रूपम् ।

पञ्चानां तक्ष्णां समाहार इति विग्रहे पञ्चतक्षी, पञ्चतक्षम् इति रूपद्वयं जायते । तत्रोक्तविग्रहे द्विगुसमासे समासत्वात्प्रातिपदिकत्वेन सुपो लुकि 'अनोनलोपश्च वा द्विगुः स्त्रियाम्' इति वार्तिकेन नकारलोपे स्त्रित्वे च 'द्विगोः' इति ङीपि 'पञ्चतक्षी

---

* 'तद्धितार्थ' इति समासे निष्पन्नात् ।

इति रूपम् , स्त्रीत्वाभावपक्षेच 'स नपुंसकम्' इति नपुंसकत्वे नलोपेच 'पञ्चतक्षम्' इति रूपं जायते । प्रकृतवार्तिके वाग्रहणं स्त्रियामित्यनेनैव सम्बध्यते नतु नलोपेऽपि तेन स्त्रीत्वाभावेऽपि नलोपो भवत्येव ।

कुक्कुट्या अण्डमितिविग्रहे कुक्कुटाण्डमितिरूपम् । अत्र षष्ठीतत्पुरुषे विभक्तिलुकि 'कुक्कुट्यादिनामण्डादिषु' इति वार्तिकेन कुक्कुटीशब्दस्य पुंवद्भावात् जातिलक्षणङीपो निवृत्तिः ।

४ प्र०—

शतधन्वा, कुड्मलाग्रदन्, दन्तौष्ठम्, उदमेघः, अन्यदुत्सुकः, द्विगुणाकर्णः, एतान् वचनैर्व्युत्पाद्य 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' 'कारनाम्निच प्राचां हलादौ', एतयोर्योगयोः फलं साधूपपादनीयम् ।

उ०—शतधन्व–शतधन्वा नाम राजविशेषः स्यमन्तकोपाख्याने प्रसिद्धः । अत्र शतधनुश्शब्दे 'वा सञ्ज्ञायाम्' इति सकारस्यानङ् ङकार इत् , अकार उच्चारणार्थः उकारस्य यण् ततः सौ 'सर्वनामस्थाने–' इति उपधादीर्घे हल्ङ्यादिना सोर्लोपे नलोपः–' इति नलोपेचोक्तं रूपम् ।

दन्तोष्ठम्—

उदमेघः—उदकपूर्णमेघसादृश्यात्कस्यचिदियं संज्ञा । अत्र मेघशब्द उत्तरपदे परतः उदकशब्दस्योदादेशः ।

अन्यदुत्सुकः—अन्य उत्सुक इति विग्रहे विषेणसमासे विभक्तिलुकि 'अषष्ठ्यतृतीयास्थस्यान्यस्य–' इति पूर्वपदस्य दुगागमे विभक्तिकार्येचोक्तं रूपं सिध्यति ।

द्विगुणाकर्णः—द्विगुणेरखौ कर्णौ यस्येति विग्रहे बहुव्रीहिसमासे सुपो लुकि 'कर्णे लक्षणस्या–'इत्यादिना पूर्वपदस्य दीर्घे ततो विभक्तिकार्ये चोक्तं रूपम् सिध्यति

द्वन्द्वश्चेति—ननु समाहारद्वन्द्वे समाहारस्य विशेष्यत्वात् तस्यचैकत्वादिदं सूत्रं व्यर्थम् इति चेन्न । अस्य सूत्रस्य नियमार्थत्वात् । प्राण्यङ्गादीनां समाहारएव न त्वितरेतरयोग इति नियमस्वरूपम् । नचेतरेतरयोगद्वन्द्वे एषामेकवत्वविधानार्थमिदं सूत्रमस्तु । तथाच पाणिपादः इति पुल्लिङ्गमेकवचनान्तं रूपं फलमिति वाच्यम् । 'समाहारग्रहणं कर्तव्यम्' इति पूर्वसूत्रस्थवार्तिकस्यानुवृत्तेः । एकवद्भावप्रकरणेऽस्मिन्सर्वत्रसमाहारद्वन्द्वनामेव भाष्ये उदाहृतत्वाच्च ।

कारनाम्नि चेति—मुकुटे कार्षापणमित्यादीनामेतत्सूत्रसिद्धोदाहरणानां

'हलदन्तात्' इति पूर्वसूत्रेणैव सिद्धत्वादिदं सूत्रं व्यर्थमिति न शङ्क्यम् । सूत्रस्यास्य नियमार्थत्वात् । कारनाम्न्येव, प्राचामेव, हलादावेवेति त्रिविधश्चात्र नियमः । तेन क्रमेण अभ्याहितपशुः, यूथपशुः, अविकटोरण इत्यत्र सप्तम्या न लुगभावः ।

५ प्र०—तत्र भवान् गार्ग्यायणः, वैयासकिः, वैदिः, नैधेयः, गार्गो गार्गिको वा जाल्मः, वासवदत्तिकः, दैर्घवरत्रः, एतान् साधयित्वा 'बिल्वकादिभ्यश्छस्य लुक्' 'नद्यां मतुप्' 'शर्कराया वा' एतेषामुदाहरणानि दर्शयत ।

उ०—तत्र भवान् गार्ग्यायणः—तत्र भवानिति पूज्यवाची युवसंज्ञकानामल्पवयस्कत्वेन वृद्धाधीनत्वेन सुखितया च पूजा । अत्र गार्ग्यस्यापत्यं युवेत्यर्थे गोत्रप्रत्ययान्तस्य गार्ग्यशब्दस्य 'वृद्धस्य च पूजायाम्' इति वार्तिकेन युवसञ्ज्ञायां 'यञिञोश्च' इति फकि फस्यायन्नादेशे 'यस्येति च' इत्यकारलोपे अनातीति पर्युदासात् 'आपत्यस्य च' इति यलोपाभावे णत्वे तद्धितान्तत्वात् प्रातिपदिकत्वे सौ सोरुत्वविसर्गयोश्चोक्तं रूपम् ।

वैदिः—बिदस्यानन्तरापत्यमित्यर्थे यद्यपि ऋषपवादेन ऋष्यणा भवितव्यं तथापि बाह्वादेराकृतिगणत्वादिञि, ञित्वात् 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे तद्धितान्तत्वात्प्रातिपदिकत्वे सौ विभक्तिकार्ये चोक्तं रूपं जायते।

नैधेयः—निधेरपत्यमित्यर्थे निधिशब्दात् 'इतश्चानिञः' इति ढकि, कित्वात् 'किति च' इत्यादिवृद्धौ ढस्य एयादेशे 'यस्येति च' इतीकारलोपे प्रातिपदिकत्वे सौ रुत्वे विसर्गे च इदं रूपं सिध्यति ।

गार्गः—गार्ग्या अपत्यमिति विग्रहे 'भस्याढे' इति पुंवत्वे सति ङीपो निवृत्तौ भूतपूर्वगत्या स्त्रीवाचकत्वमादाय गार्ग्यशब्दाण्णप्रत्यये 'यस्येति च' इत्यकारलोपे 'आपत्यस्य च' इति यलोपे च गार्गः । ठक्प्रत्यये च ठस्येकादेशे पूर्ववदकारयकारलोपयोः गार्गिक इति सिध्यति ।

वासवदत्तिकः—वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता 'अधिकृत्य कृते ग्रन्थे' इत्यर्थे 'वृद्धाच्छः' इति विहितस्य छस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति लुप् । ततो वासवदत्तामधीते वेद वा इत्यर्थे 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च' इति ठकि, ठस्येकादेशे 'यस्येति च' इत्याकारलोपे प्रातिपदिकत्वे विभक्तिकार्ये चोक्तं रूपं जायते ।

दैर्घवरत्रः—दीर्घवरत्रेण निर्वृत्त इत्यर्थे 'वह्वचः कूपेषु' इति अण्प्रत्यये ञित्वाद्

'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये चेदं रूपं निष्पन्नम् ।

बिल्वकादिभ्य इति । बिल्वा यस्यां सन्ति बिल्वकीयाः । तस्यां भवा बैल्वकाः । वेत्रकीयाः—वैत्रकाः । शर्करायाः वा—शर्करा, शार्करम् ।

नद्यां मतुप्—इक्षुमती ।

१९३७

## २ य वर्षे प्रथमपत्रम् ।

द्रष्टव्यम्—सूत्रोपन्यासो यत्रोक्तस्तत्र सम्पूर्णं सूत्रमुपन्यसनीयं नतु प्रतीकमात्रम् । व्युत्पत्तिमार्गेण संचरणं योग्यतांकलाभाय, लेखाशुद्धयश्च तद्धानये सम्पद्येरन् ।

१ प्रश्नः—द्व्यहीनः क्रतुः, एकान्नविंशतिः, रसिकाभार्यः, गोमहिषम्, शीतोष्णम्, स्थण्डिलशायी, कारीषगन्ध्या, अन्यदुत्सुकः, द्विगुणाकर्णः, क्षीरपाणम्, पितुःस्वसा, उर्वष्ठीवम् ।

एषां केषुचिदष्टसु प्रयोगेषु ससूत्रनिर्देशं विशेषकार्याणि प्रदर्श्यन्ताम् ।

उत्तराणि—

द्व्यहीनः क्रतुः—द्वे अहनी भृत इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति द्विगुसमासे 'रात्र्यहःसंवत्सराच्च' इति खप्रत्यये द्व्यहन्शब्दात्खस्य ईनादेशे 'अह्नष्टखोरेव' इति टिलोपे द्व्यहीन इति सिध्यति ।

एकान्नविंशतिः— न विंशतिरिति विग्रहे नञ्समासे सति नविंशतिशब्दस्य एकशब्देन तृतीयान्तेन सह एकेन नविंशतिरिति विग्रहे समासे कृते सुब्लुकि एक न विंशति इति स्थिते 'नलोपो नञः' इति प्राप्तस्य नकारलोपस्य 'एकादिश्चैकस्य चादुक्' इति प्रकृतिभावान्निवृत्तौ एकशब्दस्यादुगागमे सवर्णदीर्घे एकाद् नविंशतिरिति स्थिते 'यरोऽनुनासिके' इति दकारस्य पक्षेऽनुनासिकनकारे उक्तं रूपम्।

रसिकाभार्यः—रसिका भार्या यस्येति बहुव्रीहौ विभक्तिलुकि 'स्त्रियाः पुंवत्' इति प्राप्तस्य पुंवद्भावस्य 'न कोपधायाः' इति प्रतिषेधे उत्तरपदस्य उपसर्जनह्रस्वत्वे चोक्तं रूपम् ।

गोमहिषम्–गावश्च महिषाश्चेति विग्रहे द्वन्द्वसमासे विभक्तिलुकि 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इत्यनेन पाक्षिके

एकवद्भावे समासात् सौ समासस्य नपुंसकत्वात् सोरमि पूर्वरूपे चोक्तं रूपम् ।

शीतोष्णम्—शीतञ्च उष्णञ्चेति विग्रहे द्वन्द्वसमासे 'विप्रतिषिद्धञ्चानधिकरणवाचि' इति समासस्यैकवद्भावे रूपमिदं जायते ।

स्थण्डिलशायी—स्थण्डिले शेतुं शीलं यस्येति विग्रहे इन्नन्तेन 'शायिन्' शब्देन सप्तम्यन्तस्य स्थण्डिलशब्दस्य सप्तमीसमासे 'तत्पुरुषे कृति बहुलम्' इति प्राप्तस्य सप्तम्या लुकः 'नेन्सिद्धबध्नातिषु च' इति प्रतिषेधे उक्तं रूपम् ।

कारीषगन्ध्या—करीषगन्ध इव गन्धो यस्य सः करीषगन्धिः अत्र बहुव्रीहिसमासे 'उपमानाच्च' इति इत्वम् । तस्यापत्यं स्त्रीत्यर्थे 'तस्यापत्यम्' इत्यण् । 'अणिञोरनार्षयोः ष्यङ्गोत्रे' इति तस्य ष्यङादेशः । 'यस्येति च' इतीकारलोपे (आदिवृद्धौ) 'यङश्चाप्' इति चाप्प्रत्यये चोक्तं रूपम् ।

अन्यदुत्सुकः—अन्यः उत्सुकः इति कर्मधारयसमासे 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' इत्यन्यशब्दस्य दुगागमे उक्तं रूपम् ।

द्विगुणाकर्णः—द्विगुणरेखौ कर्णौ यस्येति विग्रहे समासे 'कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य' इति पूर्वपदस्य दीर्घे रूपमिदं जायते ।

क्षीरपाणम्—क्षीरस्य पानम् इति विग्रहे षष्ठीसमासे 'वा भावकरणयोः' इति पाक्षिके णत्वे रूपम् ।

पितुः स्वसा—पितुः स्वसेति विग्रहे षष्ठीसमासे 'विभाषा स्वसृपत्योः' इति षष्ठ्या अलुकि 'मातुः पितुर्भ्यामन्यतरस्याम्' इति षत्वस्य पाक्षिकत्वात्तदभावे रूपम् । समासाभावे तु सर्वथा षत्वाभावः । एवञ्च समासेऽसमासे च रूपमिदं जायते ।

ऊर्वष्ठीवम्—ऊरू च अष्ठीवन्तौ चेति विग्रहे द्वन्द्वसमासे प्राण्यङ्गत्वादेकवद्भावे 'अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः' इति निपातनात् अच्प्रत्यये टिलोपे च रूपमेतत् ।

२—प्रातिपदिकार्थलिङ्गेत्यादिसूत्रे परिमाणग्रहणप्रयोजनं स्फुटं विविच्यताम् ।

अथवा

'कर्तृकर्मणोः कृति' इति सूत्रे कृतिग्रहणं सम्यक् प्रतिक्षिप्य तत्प्रयोजनं साधु समर्थ्यताम् अनयोरुत्तरं दत्तपूर्वम् । ७

३ प्र०—छात्रं पाठशालां नयति, समेनैति, यागाय याति, आमुक्तेः संसारः, चौरस्य रोगस्य रुजा, ब्राह्मणा इतरेभ्यो बुद्धिमत्तराः, एषु तत्र तत्र तत्तद्विभक्तिविधायकानि सूत्राणि ससमन्वयमुपन्यसनीयानि ।

उत्तराणि—

छात्रं पाठशालां नयति—अत्र 'अकथितं च' इत्यनेन अकथितस्यापि कर्मसंज्ञायां नयतेः द्विकर्मकत्वात् मुख्ये कर्मणि पाठशालायां गौणे कर्मणि छात्रे च 'कर्मणि द्वितीया' इति द्वितीया ।

समेनैति—अत्र 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकेन तृतीया ।

यागाय याति—अत्र यज् धातोः 'भाववचनाश्च' इति सूत्रेण घञ्प्रत्यये कृते यागशब्दो निष्पन्नः । तस्मात् यातीत्युपपदे 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ।

आमुक्तेरिति—मुक्तेः प्रागित्यर्थः । अत्र मर्यादावचनस्य आङः 'आङ् मर्यादावचने' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इत्यनेन पञ्चमी ।

चौरस्य रोगस्येति—अत्र भावघञन्तेन रोगशब्देन विवक्षितः शारीरक्षयादिविकारविशेषः कर्ता तत्कर्मणश्चौरस्य शेषत्वविवक्षायां 'रुजार्थानां भाववचनानामज्वरेः' इति षष्ठी ।

ब्राह्मणा इति—अत्र 'पञ्चमी विभक्ते' इति पञ्चमी । अत्र हि ब्राह्मणत्वेतरत्वयोः गोत्वाश्वत्ववद्विरोधात् कथञ्चिदपि तद्रूपेण नाभेद इति निर्धारणावधेः पञ्चमीति भावः ।

४ प्र०—अनुवनमशनिर्गतः, परोक्षा क्रिया, बाणविद्धः, नररत्नम्, विरूपः, सगर्भ्यः, एषु आद्या अन्त्या वा चत्वारः प्रयोगाः लौकिकालौकिकौ विग्रहौ प्रदर्श्य, समासनामनिर्देशपुरस्सरं सूत्रोपन्यासपूर्वकं साधनीयाः । ८

उत्तराणि—

अनुवनमिति—वनस्य अनु इति लौकिकविग्रहे वन ङस् अनु इत्यलौकिकविग्रहे च 'अनुर्यत्समया' इत्यनेन अव्ययीभावसमासे कृत्तद्धितेति समासस्य प्रातिपदिकत्वे 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुकि 'प्रथमानिर्दिष्टम्' इति अनुशब्दस्योपसर्जनसंज्ञायां पूर्वनिपाते ततः समासादुत्पन्नस्य सोः 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति अमि पूर्वरूपे चोक्तं रूपम् ।

**परोक्षा**—अक्ष्णः परमिति लौकिकविग्रहे अक्षि ङस् , परम् इत्यलौकिकविग्रहे च 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति शरदादिगणे पाठात् समासान्तविधानात् अनव्ययस्यापि परशब्दस्य समासे टचि सुब्लुकि परशब्दस्य पूर्वनिपाते 'परोक्षे लिट्'इति निपातनात्परशब्दस्य ओकारान्तादेशे पररूपे 'यस्येति च' इत्यक्षिशब्दस्य इकारलोपे परोक्षमिति निष्पद्यते । ततः परोक्षमस्यास्तीत्यर्थे धर्मप्रधानात्परोक्षशब्दात् 'अर्श आदिभ्योऽच्' इत्यच्प्रत्यये 'यस्येति च' इत्यकारलोपे टापि च कृते परोक्षा क्रिया इति सिद्ध्यति ।

**वाणविद्धः**—बाणेन विद्ध इति विग्रहे बाण टा विद्ध सु इत्यलौकिकविग्रहे च 'कर्तृकरणे कृता बहुलम्' इति तत्पुरुषे समासे सुब्लुकि समासात्सौ उक्तं रूपम् ।

**नररत्नम्**—नरेषु रत्नम् इति विग्रहे नर सुप् रत्न सु इत्यलौकिकविग्रहे च सप्तमीतत्पुरुषे समासस्य प्रातिपदिकत्वेन सुब्लुकि समासात्सौ तस्य अम्भावे च रूपमिदम् ।

**विख्यः**—विगता नासिका यस्येति विग्रहे वि नासिका सु इत्यलौकिकविग्रहे च 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुब्लुकि 'ख्यश्च' इति वार्तिकेन नासिकाशब्दस्य ख्यादेशे उक्तं रूपम् ।

**सगर्भ्यः**—समानो गर्भ इति विग्रहे समान सु गर्भ सु इत्यलौकिकविग्रहे च कर्मधारयसमासे सुब्लुकि 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति समानस्य सभावे सगर्भे भव इत्यर्थे सगर्भशब्दात् तद्धिते यति उक्तं रूपम् ।

९ प्र०—तद्धितार्थोत्तरपदसमाहारे च । मनोर्जातावञ्यतौ षुक् च । इति सूत्रे सोदाहरणे व्याख्यायेताम् । ६

अथवा

अधोनिर्दिष्टानां वाक्यानामर्थे वृत्तिघटितानि वाक्यानि प्रयुज्यन्ताम् । तत्र च सप्रमाणं समासनाम तद्धितप्रत्ययो वा निर्दिश्यताम् ।

(अ) वयं काश्यां निवसामः (आ) यस्याक्षिणी पिङ्गे स इहानीयताम् (इ) स च देवदत्तश्च गमिष्यतः (ई) आवयोः क्रीडायां चपेटाप्रहरणमभूत् ।

**उत्तराणि**—

**तद्धितार्थेति**—तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये वा समस्येते स च तत्पुरुषः । पूर्वस्यां शालायां भवः पौर्वशालः पूर्वशालाप्रियः ।

दिक्षु समाहारो नास्त्यनभिधानात् । षण्णां मातॄणामपत्यं षाण्मातुरः । पञ्च गावो धनं यस्येति पञ्चगवधनः । पञ्चानां गवां समाहारः पञ्चगवम् ।

मनोरिति--मनुशब्दात् अञ्यत् एतौ प्रत्ययौ स्तः तयोः षुगागमश्च । मानुषः—मनुष्यः ।

( अ ) वयं काशीवासिनः । अत्र ङ्यन्तस्य काशीशब्दस्य समासे ङ्यापो रिति प्राप्तस्य ह्रस्वस्य, तस्य संज्ञाछन्दसोरेव विधानात् अप्रवृत्तिः ।

( आ ) पिङ्गाक्ष इहानीयताम् । अत्र पिङ्गे अक्षिणी यस्येति विग्रहे बहुव्रीहिसमासे 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति समासान्तः षच् प्रत्ययः ।

( इ ) तौ गमिष्यतः । स च देवदत्तश्चेति द्वन्द्वसमासे 'त्यदादीनि सर्वैर्नित्यम्' इति तच्छब्दैकशेषः ।

( ई ) आवयोः क्रीडायां चपेटाप्रहरणमभूत् । अत्र चपेटाप्रहरणमस्यां क्रीडायामिति विग्रहे 'तदस्य प्रहरणमिति क्रीडायां णः' इति णप्रत्ययः आदिवृद्धिश्च ।

६ प्र०—गार्गीयाः, सौभागिनेयः, शौक्रेयी, आढ्कः, काशिलः, शार्करम्, एषु यथेच्छं चत्वारः प्रयोगाः प्रत्ययार्थनिर्देशपुरस्सरं ससूत्रोपन्यासं साधनीयाः । एष्वर्थेषु विकल्पितान्यपि रूपाणि सन्ति चेत् तान्यपि लेख्यानि ।

उत्तराणि—

गार्गीयाः—गर्गाणां छात्रा इति विग्रहे गार्ग्यशब्दात् 'वृद्धाच्छः' इति छप्रत्यये छस्य ईयादेशे तस्मिन् भविष्यति अजादौ परे 'यञञोश्च' इति प्राप्तस्य लुकः 'गोत्रेऽलुगचि' इति प्रतिषेधे गार्ग्य ईय् इति स्थिते 'यस्येति च' इति यञोऽकारस्य लोपे गार्ग्य् ईय् इति स्थिते 'आपत्यस्य च तद्धितेऽनाति' इति यलोपे ततो जसि उक्तं रूपम्।

सौभागिनेयः—सुभगाया अपत्यमित्यर्थे सुभगाशब्दात् 'कल्याण्यादीनामिनङ् च' इति ढकि इनङि चढस्य एयादेशे 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदादिवृद्धौ सौ च उक्तं रूपम् ।

शौक्रेयी—शुक्राया अपत्यमित्यर्थे शुक्राशब्दात् तन्नामिकाणं बाधित्वा 'द्व्यचः' इति ढकि एयादेशे 'यस्येति च' इत्याकारलोपे आदिवृद्धौ निष्पन्नात् शौक्रेयशब्दात् 'पर्श्वादियौधेयादिभ्योऽणञौ' इत्यञि तस्य 'अतश्च' इति प्राप्तस्य लुकः 'न प्राच्यभर्गादियौधेयादिभ्यः' इति प्रतिषेधे 'शार्ङ्गरवाद्यञो ङीन्' इति ङीनि 'यस्येति च' इत्यकारलोपे चोक्तं रूपं जायते ।

आह्नः—अह्नां समूह इति विग्रहे कुत्वप्रतीतेः 'अह्नः खः क्रतौ' इति वार्त्तिकाप्रवृत्तेः 'खण्डिादिभ्यश्च' इत्यञि 'अह्नष्टखोरेव' इति नियमाट्टिलोपाभावे 'अल्लोपोऽनः' इत्यकारलोपे रूपमिदम् ।

काशिलः—काशेन निर्वृत्त इति विग्रहे काशशब्दात् 'वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः' इति इलप्रत्यये 'यस्येति च' इत्यकारलोपे रूपमिदं जायते ।

शार्करम्—शर्कराशब्दात् 'शर्कराया वा' इति सूत्रे वाग्रहणसामर्थ्यात् अणि आदिवृद्धौ इदं रूपम् । अस्यैवाणः उक्तसूत्रेण पाक्षिके लुपि युक्तवद्भावे च 'शर्करा' इति द्वितीयं रूपम् । शर्कराशब्दस्य कुमुदादिपाठात् ठचि 'शर्करिकम्' तृतीयं रूपम् । वराहादिपाठात् कक्कि च 'शार्करकम्' इति चतुर्थं रूपम् । 'ठक्छौ च' इति सूत्रेण ठकि 'शार्करिकम्' इति पञ्चमं रूपम् । छप्रत्यये च 'शर्करीयम्' इति षष्ठं रूपं जायते ।



* श्रीः *

## * द्वितीयखण्डे *

# किरातार्जुनीयप्रश्नाः ।

सन् १९०४

१ कृतारिषड्वर्गजयेनेति । २ वनान्तशय्याकठिनीकृताकृतीति ।
३ द्विपतामुदयः सुमेधसेति । ४ ज्वलतस्तव जातवेदस इति ।
५ उपकारकमायतेर्भृशमिति । ६ विधाय विध्वंसमनात्मनीनमिति ।
७ निर्याय विद्याथ दिनादिरम्यात इति ।
८ करोति योऽशेषजनातिरिक्तामिति ।

कोशविग्रहप्रदर्शनपूर्वकं दण्डान्वयेन व्याख्येया एते श्लोकाः ।

सन् १९०५

१ अखण्डमाखण्डलधामभिः० । २ पुरःसरा धामवतां यशोधनाः० ।
३ चतसृष्वपि ते विवेकिनी० । ४ तदलं प्रतिपक्षमुन्नतेः० ।
५ उपकारकमायतेर्भृशम्० । ६ विधाय विध्वंसमनात्मनीनम्० ।
७ धैर्यावसादेन हृतप्रसादा० ।

एते श्लोकाः कोशसमासादिप्रदर्शनपुरस्सरं स्पष्टं व्याख्येयाः ।

सन् १९०८

१ अनेकराजन्यरथाश्वसंकुलम्० । २ वनान्तशय्याकठिनीकृताकृती० ।
३ प्रभवः खलु कोशदण्डयोः० । ४ मतिभेदतमस्तिरोहिते० ।
५ विधाय विध्वंसमनात्मनीनम्० । ६ यशोधिगन्तुं सुखलिप्सया वा० ।
७ अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशा० ।

एते दण्डान्वयमवलम्ब्य कोशविग्रहप्रदर्शनपूर्वकं व्याख्येयाः ।

सन् १९१२

१ स किंसखा साधु न शास्ति० । २ कथाप्रसङ्गेन जनैरुदाहृतात्० ।

३ विषमोऽपि विगाह्यते नयः० । ४ विधिसमयनियोगात्० ।
५ अवहितो हशो विधाय सोऽर्हां०। ६ अथोष्णभासेव सुमेरुकुञ्जान्० ।
७ व्रीडानतैराप्तजनोपनीतः० । ८ तान्भूरिधाम्नश्चतुरोऽपि दूरम्० ।

एतानि पद्यानि प्रतिशब्दं पर्यायैः कोशविग्रहभावार्थनिरूपणपूर्वकं व्याख्येयानि केवलं टीकानुपूर्वीलेखेत्वङ्कलाभो न भवेत् ।

सन् १९१३

१ अनेकराजन्यरथाश्वसंकुलम्० । २ वनान्तशय्याकठिनीकृताकृती० ।
३ चतसृष्वपि ते विवेकिनी० । ४ व्यक्तोदितस्मितमयूखविभासि० ।
५ सृजन्तमाजाविपुसंहतीर्वः० । ६ मग्नां द्विपच्छद्मनि पङ्कभूते० ।
७ अनुजगुरथ दिव्यं दुन्दुभिध्वान० ।

एते श्लोकाः खण्डान्वयेन प्रतिशब्दं पर्यायैः कोशविग्रहभावार्थनिरूपणपूर्वकं व्याख्येयाः ।

सन् १९१७

१ अनारतं तेन पदेषु लम्भिता० । २ पुरस्सरा धामवतां यशोधनैः० ।
३ चतसृष्वपि ते विवेकिनी० । ४ अभिवर्षति योऽनुपालयन् ।
५ अपरागसमीरिणेरितः० । ६ असंशयालोचितकार्यनुन्नः० ।
७ दुःशासनामर्षरजोविकीर्णैः० ।

एते श्लोकाः कथासंदर्भपूर्वकं कोशसमासपर्यायाननुसृत्य दण्डान्वयेनैव व्याख्येयाः ।

सन् १९१८

१ वसूनि वाञ्छन्न वशी न मन्युना० । २ गुणानुरक्तामनुरक्तसाधनः ।
३ द्विपन्निमित्ता यदियं दशा तव० । ४ अचिरेण परस्य भूयसीम्० ।
५ द्विरदानिव दिग्विभावितान्० । ६ लघुवृत्तितया भिदां गतम्० ।
७ तान् भूरिधाम्नश्चतुरोऽपि दूरम्०। ८ वीतौजसः सन्निधिमात्रशेषाः०।

एते श्लोकाः सुस्पष्टं कथासंदर्भपूर्वकं दण्डान्वयमनुसृत्य व्याख्येयास्तत्र कोश-समासपदपर्याया अपि प्रदर्शनीयाः ।

सन् १९२०

१ असक्तमाराधयतो यथायथम्० । २ भवादृशेषु प्रमदाजनोदितम्० ।
३ पुरःसरा धामवतां यशोधनाः० । ४ द्विषतामुदयः सुमेधसा० ।

५ शिवमौपयिकं गरीयसीम्० । ६ चिचीषतां जन्मवतामलघ्वीम्० ।
७ असंशयालोचितकार्यनुन्नः० । ८ उदीरितां तामिति याज्ञसेन्या० ।

एतेषां व्याख्यासु कथासंदर्भसमासविग्रहकोपाः प्रदर्शनीयाः । पर्यायशब्दानुप्रवेशनेन वा केवलान्वयप्रदर्शनेन वा न सम्यगङ्कलाभः ।

सन् १९२१

१ द्विषां विघाताय विधातुमिच्छतः० । २ महीभृतां सच्चरितैश्चरैः० ।
३ इमामहं वेद न तावकीं धियम्० । ४ प्रभवः खलु कोशदण्डयोः० ।
५ श्रुतमप्यधिगम्य ये रिपून्० । ६ व्यक्तोदितस्मितमयूखविभासितोष्ठ० ।
७ सुता न यूयं किमु तस्य राज्ञः । ८ मागाश्चिरायैकचरः प्रमादम्० ।

(अ) टीकाक्रमेण सुव्याख्येयाः सर्वे श्लोकाः । केवलान्वयप्रदर्शनेन टीकानुपूर्वीलेखेन वा नाङ्कलाभ इति ।

(क) चतुर्थपञ्चमषष्ठश्लोकानां तात्पर्यं सरलसंस्कृतेन लेख्यम् ।

सन् १९२२

१ विधाय रक्षान्परितः परेतरान्० । २ अवन्ध्यकोपस्य विहन्तुरापदाम्० ।
३ अनारतं यौ मणिपीठशायिनौ० । ४ द्विषतामुदयः सुमेधसा० ।
५ अथोच्चकैरासनतः परार्ध्यात्० । ६ निर्याय विद्याथ दिनादिरम्यात्० ।
७ अकृत्रिमप्रेमरसाभिरामम्० । ८ आक्षिप्यमाणं रिपुभिः प्रमादात्०

कोशविग्रहभावोपदर्शनपूर्वकं दण्डान्वयमवलम्ब्य निजसंस्कृतेनैते श्लोका व्याख्येयाः । केवलटीकानुपूर्वीलेखेऽङ्कलाभो न भविष्यति ।

सन् १९२३

१ अनारतं तेन पदेषु लम्भिताः० । २ न समयपरिरक्षणं क्षमं ते० ।
३ प्रभवः खलु कोशदण्डयोः० । ४ अभिवर्षति योऽनुपालयन्० ।
५ असमापितकृत्यसंपदाम्० । ६ त्रिःसप्तकृत्वो जगतीपतीनाम्० ।
७ निर्याय विद्याथ दिनादिरम्यात्० । ८ तान्भूरिधाम्नश्चतुरोऽपि दूरम्० ।

कोशविग्रहभावप्रदर्शनपुरस्सरं दण्डान्वयमवलम्ब्य निजसंस्कृतेनैते श्लोका व्याख्येयाः । केवलं टीकानुपूर्वीलेखेऽङ्कलाभो न भविष्यति ।

सन् १९२४

१ अखण्डमाखण्डलतुल्यधामभिः० । २ विजित्य यः प्राज्यमयच्छदुत्तरान्० ।

३ विहाय शान्तिं नृप धाम तत्पुनः०। ४ प्रभवः खलु कोशदण्डयोः० ।
५ अथोच्चकैरासनतः परार्ध्यात्० । ६ अनाप्तपुण्योपचयैः० ।
७ अथोष्णभासेव सुमेरुकुञ्जान्० । ८ अकृत्रिमप्रेमरसाभिरामम्० ।

एते श्लोकाः कोशविग्रहभावप्रदर्शनमुखेन दण्डान्वयमवलम्ब्य स्फुटं व्याख्येयाः । टीकानुपूर्वीलेखेऽङ्कलाभो न भविष्यति ।

सन् १९२५

(क) क्रियासु युक्तैर्नृपचारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः । अतोऽर्हसि क्षन्तुमसाधुसाधु वा हितं मनोहारि च दुर्लभं वचः ॥

(ख) पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः । अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ॥

(ग) परिणामसुखे गरीयसि व्यथकेऽस्मिन्वचसि क्षतौजसाम् । अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः ॥

(घ) सृजन्तमाजाविषुसंहतीर्वः सहेत कोपज्वलितं गुरुं कः । परिस्फुरल्लोलशिखाग्रजिह्वं जगज्जिघत्सन्तमिवान्तवह्निम् ॥

१ वक्तृबोद्धव्यनिर्देशपुरस्सरं मल्लिनाथरीत्या व्याख्यायन्तामिमे श्लोकाः ।

२ क चिह्नितश्लोकस्याद्यं चरणद्वयं वाच्यान्तरे परिणमय्य 'अतः' इत्यस्य कोऽर्थः 'असाधु' 'साधु वेति' कस्य विशेषणं तल्लिख्यताम् ।

३ 'राजानश्चारचक्षुषः' इति किमपि प्रमाणमुद्धृत्य समर्थ्यताम् । २

४ 'गरीयसि' 'जिघत्सन्तम्' इति पदद्वयं कथं निष्पन्नं तन्निरूप्य अधोरेखाङ्कितपदानां समासनामानि विग्रहवाक्यानि च प्रदर्श्यन्ताम् । १०

५ सरलसंस्कृतभाषया पद्यांशानामेषां तात्पर्यं विशदीक्रियताम् । १२

(क) समुन्नयन् भूतिमनार्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिः ।

(ख) प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ।

(ग) विश्वासयत्याशु सतां हि योगः ।

(घ) अगतावरिदृष्टिगोचरं शितनिस्त्रिंशयुजौ महेषुधी ।

५ (क) यद्यपि साधुभिः सह विरोधो न प्रशस्यते विपश्चिद्भिस्तथापि यदि नाम तद्विरोधेनात्मनः सम्पदुत्कर्षः सम्भवेत्तदा तदाचरणे न कापि हानिः स्वोन्नतिर्हि पुरुषस्य परमं कर्त्तव्यम् ।

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri



(ख) केचिज्जनाः परेषामुन्नतिं वीक्ष्य तामुपेक्षन्तेऽपरे पुनः प्रतिकुर्वन्ति ते च महीयांसो भवन्ति यतः खलु स तेषां स्वभाव एव। पराक्रामन्तमपि शत्रुमवलोक्य दैन्यदर्शनं कापुरुषसेवितः पन्थाः। सन्तश्च तं विगर्हन्ति।

(ग) साधुजनानामाचरणं निश्छलं भवति। निर्व्याजाचरणेन तेषामपरिचितोऽपि तं विश्वसिति। दुर्जनास्तु सर्वेष्वेव व्यापारेषु सकपटं व्यवहरन्ति अतः चिरपरिचितानि मित्राण्यपि तान् सर्वदा शङ्कमाना न विश्वसन्ति।

(घ) युद्धे पराजित्य बन्दीकृतानां पुरुषाणां शस्त्रास्त्राणि रिपव आददते। अर्जुनस्तु महावीरतया न केनापि कदाचिदपि सङ्ग्रामेऽवजितः तदस्त्रग्रहणं तु दूरमास्ताम्। अतस्तदस्त्रविशेषणमिदं सार्थकम्। अयमेव चाभिप्रायो विशेषणस्यास्य।

सन् १९२६

१ सुखेन लभ्या दधतः कृषीवलैः०। २ विधिसमयनियोगाद्दीप्तिसंहारजिह्मम्०

३ अपवर्जितविप्लवे शुचौ०। ४ उपकारकमायतेर्भृशम्०।

५ अवहितहृदयो विधाय सोऽर्हाम्०। ६ अथोष्णभासेव सुमेरुकुञ्जान्०।

७ करोति योऽशेषजनातिरिक्ताम्०।

कोशविग्रहतात्पर्यादिनिरूपणपूर्वकं व्याख्येया अमी श्लोकाः।

सन् १९२७

१ व्याख्यायन्तामिमे श्लोकाः—

(क) गुणानुरक्तामनुरक्तसाधनः०। (ख) अभिवर्षति योऽनुपालयन्०।

(ग) स क्षत्रियस्त्राणसहः सताम्० १२

२ 'भारवेरर्थगौरवम्' इत्याभाणकं निपुणं विचार्यताम्। ६

३ अधस्तनश्लोकांशानां किमपि चतुष्टयं सन्दर्भसम्बन्धनिर्देशपुरस्सरं व्याख्येयम्।

(क) परैति कार्श्यं यशसा समं वपुः०।

(ख) ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः।

(ग) क्रियते पतिरुच्चकैरपां भवता धीरतयाऽधरीकृतः०।

(घ) निरास्पदं प्रश्नकुतूहलित्वम्।

(ङ) संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति संख्या। १२

४ वनेचरोक्तदुर्योधनवृत्तान्तः संक्षेपेणोपवर्ण्यताम्। १०

५ (क) अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः। अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः।

अत्र केषाञ्चिन्मते जन्तुपदं सदोषं कोऽसौ दोषः ? कथं वा सः ? 'विद्विपादरः' इत्यत्र मल्लिनाथमते द्विधापदच्छेदः कथं समर्थनीयः ? ३

[ख] श्रुतमप्यधिगम्य ये रिपून् विनयन्ते न शरीरजन्मनः ।
जनयन्त्यचिराय सम्पदामयशस्ते खलु चापलाश्रयम् ।

श्लोकस्यास्य तात्पर्यार्थः सरलसंस्कृतेन प्रकटनीयः । 'विनयन्ते' इत्यत्र कथमात्मनेपदम् ?

## उत्तराणि ।

१—सुप्रसिद्धेयमुक्तिः कविमण्डले यद् 'भारवेरर्थगौरवम्' इति । उक्तेश्चास्या अयमेवाशयः, यदर्थगरिम्णिभारविरन्यान्कवीन् सर्वथाप्यतिशेते । न चैतेन कालिदासप्रभृतिष्वर्थगरिमा नास्तीति प्रत्येतव्यम् , किन्त्वत्रास्य विशिष्टोऽधिकारः यथा कविकुलगुरोरुपमायाम् । यथा वा पदलालित्ये नैषधकर्त्तुः । साम्प्रतं समुत्पद्यत इयं जिज्ञासा यत्कोऽयमर्थगरिमा यदर्थं भारवेः प्रभूता प्रसिद्धिः—उच्यते आपातकठिनेषु पदेषु सुमधुरभावार्थसमूहसन्निवेशनमेवार्थगरिमेति प्रतिभाति ।

तथा हि—यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः ।
ग्लानिदोषच्छिदः स्वच्छाः समूढः पङ्कयत्यपः ॥

द्वात्रिंशदक्षरपरिमिते प्रगाढबन्धसमुज्ज्वलेऽस्मिन्पद्ये किं हि समयोपयुक्तं नोक्तं कविना के के वा सुमधुरा भावा नाभिव्यक्तिं नीताः । कः खलु ऋते भारविमेतादृशीरर्थभारभरिता उक्तीः प्रकटयितुं प्रभवेत् । अतएव तत्र भवता सूरिसत्तमेन मल्लिनाथेनापि—नारिकेलफलसम्मितत्वमस्य वचसां प्रोक्तमादिष्टञ्च 'रसगर्भनिर्भरमेतमास्वादयन्तु रसिका अवश्यम् । इयं चार्थगुर्वी तरलमतीनामपि धीपरिणमननिपुणा वाणी विद्वज्जनमनसि समधिकतरमानन्दमुत्पादयत्येवेति कल्पतरोरिवास्य भारविप्रबन्धस्य मधुरफलमास्वाद्य के न विमुग्धा विपश्चितः ।

अत्र पूर्वार्धे आपदां दारिद्र्यरूपाणां विहन्तुः विनाशयितुः । दातुरित्यर्थः । इत्यर्थेन दारिद्र्यरूपापद्विघातकतया दातृत्वं विवक्षितमिति द्वितीयार्धे तद्वैपरीत्यप्रदर्शकं जन्तुपदमदातरि ( जन्तुना—अतोऽत्राऽऽदरोऽपि न ) प्रयुक्तम् । तत्र च जायत इति योगमपेक्ष्य शक्तत्वेऽपि न विवक्षितत्वया अदातृतया प्रकारेण सेत्य वाचकाख्योऽत्र दोषः । मल्लिनाथकृद्व्याख्याने तु नायं दोषः ।

'विद्विपादरः' इत्यत्र सन्धिवशात् विद्विषा, दरः इति पदच्छेदः, 'विद्विपा आदरः' इति च पदच्छेदः ।

४—वनमधिवसन्तः पाण्डवा एकदा दुर्योधनराज्यवृत्तान्तं वेदितुमेकं वनेचरं प्राहिण्वन् । सकलज्ञातवृत्तान्तः सोऽपि प्रत्यावृत्य युधिष्ठिरं प्रणम्य तद्वृत्तान्तमश्रावयत् । राजन् ! यद्यपि भूपतीनां चरितं स्वभावदुर्गमं भवति तथापि भवतः प्रभावेण मयाधिगतस्तद्वृत्तान्तः । छद्मना जितमपि भवतो राज्यं कथमहमात्मसात्कुर्यामिति चिन्तैषा जागर्ति सततं दुर्योधनस्य मनसि, सिंहासनमधिरूढोऽप्यरण्यसदो भवतः सर्वदा बिभेति च । अतएव स निस्तन्द्रः सन्नीतिपूर्वकं पुरुषार्थं वितनोति अनुजीविषु, मित्रेषु, बन्धुषु तथा सस्नेहं व्यवहरति यथाऽनुजीविनोऽस्मानं तन्मित्रम्, मित्राणि स्वं तद्बन्धून्, बन्धवश्चात्मानं प्रभुमेव मन्यते । यथावकाशं धर्मार्थकामान् तिष्ठति न काप्येकस्मिन्नेव संयति तेषाम् । सततं गुणवत आद्रियते, सत्कारपूर्वकं तेभ्यो धनं यच्छति । कृतापराधं रिपुं पुत्रमपि च समानभावेन व्यवहारनिर्णेतॄणां निर्णयानुसारं ममायं धर्म इति मत्वा दण्डयति । परेभ्यः शङ्कितः सन् रक्षाप्रबन्धं विधायाशङ्कितमिवात्मानं दर्शयति । कृतकृत्यांश्च भृत्यान् साधु द्रव्यादिप्रदानेन सत्कुरुते । सामाद्युपायांश्चतुरोऽपि यथाकालं यथावसरं प्रयुनक्ति । किं वर्ण्येत तद्वैभवम्—सर्वदैव तस्याजिरं नृपैरुपायनीकृतैरश्वैर्दन्तिभिश्चाकुलीक्रियते मेदनी च स्वयं रत्नानीव प्रसूते । प्रजानां सुखाय तेन सर्वत्र कुल्या निर्मापिता येन वर्षाऽभावेऽपि शालिसम्पदो न परिहीयन्ते । महापराक्रमशालिनो योधानपि धनादिना साधु सत्कुरुते, सत्कृताश्च तेऽप्यसुव्ययेनापि तद्धितं सम्पादयितुमभिलषन्ति । स्वगुप्तचरैः परेषां समस्तं कार्यजातं वेत्ति । स्वयन्तु तथा सुगुप्तं विदधाति कार्याणि यथा फलैरेव तद्धीहितमन्यैर्ज्ञायते । राजभिरनुरागेणैव तदाज्ञाऽनुष्ठीयते । दुर्योधनः खलु दुःशासनं युवराजानं विधाय पुरोधसादिष्टो मखान् निर्वर्तयति । एवं सत्यपि राज्यप्रबन्धे सर्वदा स त्वत्तो बिभेत्येव । यदा कदा कथाप्रसङ्गे तु तवाभिधानं श्रुत्वाऽनुस्मृतार्जुन पराक्रमे दीनाननः खिद्यते नितराम् । ततो यावत् तवानिष्टं न विदधाति तावत्त्वयाऽपि प्रतिविधातव्यमिति ।

सन् १९१८

१ अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री ।

तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः ॥

२ प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥

३ मतिमान् विनयप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे विपदन्ता ह्यविनीतसम्पदः ॥

४ गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥

५ न तेन सज्यं क्वचिदुद्यतं धनुः कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ॥

६ प्रियेषु यैः पार्थ विनोपपत्तेर्विचिन्त्यमानैः क्लममेति चेतः ।
तव प्रयातस्य जयाय तेषां क्रियादघानां मघवा विघातम् ॥

७ उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥

(क) एते श्लोका व्युत्पत्तिकोशपर्यायप्रदर्शनपुरस्सरं दण्डान्वयेन व्याख्येयाः ३९

(ख) अधोनिर्दिष्टरेखाङ्कितपदानां समासोऽत्रइयंले ख्यः । १९
टीकानुपूर्वीलेखनेन नाङ्कप्राप्तिर्भविष्यति ।

सन् १९३०

१ (क) निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः । तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥

(ख) अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥

(ग) अथोष्णभासेव सुमेरुकुञ्जान् विहीयमानानुदयाय तेन ।
बृहद्द्युतीन् दुःखकृतात्मलाभं तमः शनैः पाण्डुसुतान्प्रपेदे ॥

एषु त्रिषु पद्येषु कयोश्चिद्द्वयोरन्वयपूर्विका कोपव्याकरणांशगर्भिता सुस्फुटा व्याख्या लेख्या । सर्वत्र समस्तपदानां विग्रहवाक्यानि दर्शनीयानि तात्पर्यं च पद्यानां दर्शनीयम् । १६

२ (क) उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया(१) । स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता(२)वसूपमानस्य वसूनि मेदिनी ॥

(ख) (३)श्रुतमप्यधिगम्य ये रिपून् विनयन्तेन शरीरजन्मनः(४) ।
जनयन्त्यचिराय संपदामयशस्ते खलु चापलाश्रयम् ॥
(ग) प्रसादलक्ष्मीं दधतं(५) समग्रां वपुः (६)प्रकर्षेण जनातिगेन ।
प्रसह्य चेतःसु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥

एषु त्रिषु यथेच्छं पद्यद्वयस्यान्वयं प्रदश्यं भावार्थः स्वसंस्कृतेन तथा दर्शनीयो यथाऽल्पमप्यपरिहीणं स्यात् । प्रतिपदं पर्यायप्रदर्शनं नावश्यकम् । रेखाङ्कितानां विग्रहाः प्रदर्शनीयाः । संख्याङ्काङ्कितेषु च कस्मिन्नर्थे का विभक्तिरिति लेख्यम्। १२

३ प्रियेषु यैः पार्थविनोपपत्तेः...अस्य पद्यस्य भावार्थमात्रं स्वसंस्कृतेन प्रदर्शनीयम् । मूलाक्षराणां स्पर्शोऽपि न कार्यः । ७

४ (क) विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥
(ख) विधाय विध्वंसमनात्मनीनं शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशितत्वन्मतिशीलसाराः कृतोपकारा इव विद्विषस्ते ।

अस्मिन्पद्यद्वये कस्यचिदेकस्यान्वयं स्पष्टं विलिख्य हिन्दीभाषया तदभिप्रायः प्रकाश्यताम् । रेखाङ्कितेषु च प्रकृतिप्रत्ययविभागः क्रियताम् । ७

५ (क) वरं विरोधोऽपि समं महात्मभिः । (ख) प्रवृत्तिसाराः खलु मादृशां गिरः । (ग) अगरीयान्नपदं नृपश्रियः । (घ) विपदन्ता ह्यविनीतसम्पदः ।

एषां खण्डानां तात्पर्यं हिन्दीभाषया लिख्यताम् । व्याख्या न कार्या ।

एषामुत्तराणि अस्मत्प्रकाशितकिरातार्जुनीयटीकातः स्फुटमवगम्यन्ते । उदाहरणार्थं द्वितीयप्रश्नान्तर्गतैकस्य श्लोकस्य भावार्थः प्रदर्श्यते—उदारकीर्त्तेरिति । राजा दुर्योधनः नानाविधैः सत्कार्यैर्जगत्यां महतीं कीर्तिं स्थापयति, सर्वदा परदुःखं हर्त्तुमिच्छति च । सर्वां बाधां प्रशमय्य यथोचितपालनेन स राज्यस्योन्नतिं विदधाति । तेन च प्रजानां प्रचुरार्थसम्पत्तिः स्वल्यापि यथेष्टमर्थागमः स्यात् । अतो मन्ये—यथा प्रशस्ता गौः कस्यचिद्विचक्षणस्य दोग्धुर्गुणवशीभूता स्वयमेव पयःसम्भारमुपहरति तथा तादृशदुर्लभस्य कुबेरतुल्यस्य नरपतेर्गुणाकृष्टेन वसुधा स्वयं प्रभूतानि धनरत्नानि प्रसूय तस्मै प्रयच्छतीति । इति पीयूषवर्षिणी । तत्र सर्वश्लोकानामीदृश एवार्थः सारल्येन वर्णितः ।

## सन् १९३१

१ कोशसमासपर्यायसंदर्भप्रदर्शनपूर्वकमन्वयमुखेन व्याख्येया अधस्तनश्लोकाः। ..२६

(क) कथाप्रसङ्गेन जनैरुदाहृतात्० ।

(ख) अवन्ध्यकोपस्य विहन्तुरापदाम्० ।

(ग) विषमोऽपि विगाह्यते नयः० ।

(घ) स्फुटता न पदैरपाकृता० ।

(ङ) सरनां द्विपच्छद्मनि पङ्कभूते० ।

२ (ग) (ङ) चिह्नितयोः श्लोकयोर्वक्तृबोधव्यनिर्देशः कार्यः । ...४

(घ) चिह्नितश्लोके गिरां सामर्थ्यं कीदृशम् । ...२

(ङ) चिह्नितश्लोके प्रसिद्धेरित्यत्र का नाम विभक्तिः । अस्मद्भिनेति समस्तमसमस्तं वा ? असमस्तं चेत् का विभक्तिः ? ...४

३ वनेचरोक्तदुर्योधनराजशासनप्रणालीवृत्तान्तः स्वकीयशब्दैरनूद्य लेखनीयः।...१० अनुजगुरथदिव्यं दुन्दुभिध्वानमाशा...इत्यादि पद्यस्य वाच्यान्तरे परिणतिर्विधेया भावार्थश्च वर्णनीयः । ...६

४ श्लोकानां भावार्थः, सरलार्थादयोऽस्मत्कृतायां किरातार्जुनीयस्य पीयूषवर्षिण्यां टीकायां द्रष्टव्यः । तत्र हि साधुप्रतिपादिता इमे विषयाः ।

## युधिष्ठिरं प्रति द्रौपदीवाक्यम् ।

राजन् ! भवादृशं प्रति मादृशस्य स्त्रीजनस्योपदेशवाक्यं तिरस्कारवत्प्रतीयते, तथाऽप्यरिनिकारस्मरणात् दुःखेनाभिभूयमानाऽहं किञ्चिद्वक्तुमिच्छामि । पूर्वपुरुषैः चिरपालिता मही त्वया स्वदोषेणैव शत्रुभिर्हारिता, शठान्प्रति शाठ्यं नाचरतां जनानामेवमेव पराजयः सम्भवेत् । एवं दुर्दशामापन्नोऽपि भवान् शत्रुभ्यो न क्रुध्यतीति महदाश्चर्यम् । जनाः कोपशालिनश्चेव विपदं निवारयितुं सर्वांश्च वशीकर्तुं शक्नुवन्ति, अन्यथा तस्मान्न कोऽपि बिभेति न तमाद्रियते । अभ्यस्तरक्तचन्दनविलेपनं भीमसेनं गिरिमध्ये भ्रमन्तं सधूलियुक्तसर्वाङ्गं दृष्ट्वाऽपि किं ते चित्तं न व्यथते ? उत्तरकुरुविजयेन संगृहीतबहुधनमर्जुनं वल्कलवसनमाहरन्तं दृष्ट्वा किन्ते शत्रून्प्रति क्रोधो न समुत्पद्यते ? कोमलदेहौ नकुलसहदेवौ वनान्तशायिनौ समन्तात् केशव्यासौ चावलोक्य कथं न ते धैर्यमपगच्छति ? कीदृशी ते बुद्धिस्तदहं न

जानामि, किन्तु भवदापदं विचिन्तयन्ती अतीव कष्टमनुभवामि। पुरा बहुमूल्यशय्याशायी स्तुतिगीतादिभिर्मङ्गलशब्दैः प्रबोधितस्त्वमधुना कुशशायी अमङ्गलकरैः शृगालशब्दैः जागरितो भवसि। पुरा सुस्वादु भक्ष्यं भुक्त्वाऽधुना वन्यफलमूलैर्जीवनं धारयसि, बहुमूल्यासने स्थापितौ चरणौ च कुशवने स्थापयसि। शत्रुकृतेयं ते दशेति चिन्तयन्त्या मेऽतीवदुःखं जायते। अत एव हे नृप! शमं परित्यज्य अनुग्रहपूर्वकं शत्रुवधाय क्षत्रोचितं विक्रमं प्रकाशय। किन्तु यदि क्षमामेव सुखकारणं मन्यसे, तदा राजचिह्नेन कार्मुकेण किम्? तत्परित्यज्य वनेऽस्मिन्जटां धृत्वाऽग्नौ होमादिकमेव कर्त्तव्यम्। अनिष्टकरेषु कपटेषु शत्रुषु निर्दिष्टसमयोऽपि नोपेक्षणीयः। यतो विजयार्थिनः यत्किञ्चिदपि छलं प्राप्य सन्धिभङ्गं कुर्वन्ति। पूर्वदिनेऽस्तगमनात्परदिने प्रातः सूर्यः पुनः शोभां प्राप्नोति, तथा त्वमपि पुनः स्वराज्यं प्राप्य राजलक्ष्म्या शोभमानः अस्माकमानन्दं विदधातु इत्यहं प्रार्थये।

## युधिष्ठिरं प्रति भीमवाक्यम्।

अभिमानवती द्रौपदी रमण्यपि यद्वाक्यमुक्तवती तद् बृहस्पतिरपि वक्तुं न समर्थयते। नीतिमार्गस्य सत्यपि श्रोतरि वक्ता न सुलभः। रमण्यपीयं नीतिमुपदिशतीति महदाश्चर्यम्। रोगिणामौषधमिव द्रौपदीवाक्यमापातकठोरमपि परिणामसुखावहम्। गुणग्राहिणो भवतो वाक्यमेतत्सर्वथा ग्राह्यम्। सर्वविद्यानां पारंगताऽपि ते बुद्धिः कथं विपर्ययं प्राप्यावसन्ना जाता? शत्रूणां शुभावहा समुन्नतिरुपेक्षितुं न युक्ता। पञ्चाङ्गविनिर्णयपूर्वकं नीतिप्रयोग एव कार्यसिद्धेर्निदानम्। अतो नीतिप्रयोगपुरस्सरं विक्रम्य राज्यं ग्रहीतव्यम्। विक्रमहीनो जनो लघुत्वमाप्नोति, लघुश्च राजलक्ष्मीं न लभते तस्मादुन्नतिविरोधिनमनुत्साहं परित्यज्य विक्रमितव्यम्। शत्रुकृतस्यावधेरपि प्रतीक्षणं न कर्त्तव्यम्। यतो दुर्योधनोऽवधेरन्तेऽपि युद्धं विना राज्यं न दास्यति। प्रदत्तेऽपि राज्येऽस्माकं बाहुबलं विफलं स्यात्। अभिमानिनः प्राणव्ययेनापि यशो लब्धुमिच्छन्ति, लक्ष्मीलाभस्त्वानुषङ्गिकः। यद्धुनाऽपि शत्रूणां विपन्नोपस्थिता तत्तु तवानुत्साहेनैव। युद्धेऽस्माकं पराजयशङ्काऽपि न कार्या, यतस्तवानुजानां बाहुबलं शत्रुषु न केऽपि सोढुं शक्ष्यन्ति। अहं हि प्रार्थये रिपुनारीणां नयनवारिणा कोपाग्निस्ते शाम्यतु इति।

## भीमं प्रति युधिष्ठिरवाक्यम् ।

त्वया सर्वमेव वाक्यं युक्तियुक्तमुक्तम् । त्वामन्तरेण कोऽन्यः सहसा एवं शोभनंतवाक्यं वक्तुं क्षमः स्यात् । तथाऽप्यधिवृतं मे हृदयं सिद्धान्तपक्षं प्रत्येव धावति । अविमृश्य कारित्वं सर्वासामापदां मूलमिति विमृश्य कर्तव्यम् । तेन हि कार्यसिद्धिरवश्यम्भाविनी । उन्नतिकामैः प्रागेव क्रोधः परिहरणीयः । अजितेन्द्रिया लक्ष्मीं प्राप्यापि रक्षितुं न शक्नुवन्ति । अत इतरजनवद् असमये कोपं कृत्वा नातिसाध्यफलात् भवादृशानां विच्युतिर्न युक्ता । शास्त्रमजिगत्यापि यः क्रोधादीन् रिपून् न वशीकरोति, अचिरादेव तस्य लक्ष्मीभ्रंशः सम्भवेत् । जगत्यस्मिन् तितिक्षाक्षमं कार्यसाधकं नास्ति । वृष्णिवंशीया राजानः प्रणतिप्रवणानस्मान्विहाय दुर्योधनं चिरं न प्रणंस्यन्ति । अन्येऽपि नृपास्तत्पक्षीया दुर्योधनात् भेदं प्राप्य अस्मानेवाश्रयिष्यन्ति । अभिमानी दुर्योधनः स्वयमेव तेषामवमाननां कृत्वा तान्भेदयोग्यान्करिष्यति । भेदजर्जरितो हि रिपुः सहिष्णुतानायासेनैवोत्सादयितुं शक्यते । मतिमान् जनो विनयहीनस्य रिपोः समुन्नतिं समुपेक्ष्य कस्मिंश्चित् रन्ध्रे प्राप्ते तं लीलया विनाशयेत् । वयमपि यथासमये आक्रम्य तं विनाश्य राज्यं ग्रहीष्याम इत्यलं सत्वरकार्यविधानेन ।

## युधिष्ठिरं प्रति व्यासवाक्यम् ।

हे युधिष्ठिर ! यद्यपि सर्वैरेव जनैर्विशेषतश्च तपोधनैर्बन्धुषु समतयैव व्यवहर्तव्यं तथाऽपि तव गुणैर्मे हृदयं त्वदेकपक्षपाति संवृत्तम् । यूयं किमु धृतराष्ट्रस्य पुत्रा न भवथ ? स्वीयगुणैर्दुर्योधनं वा नातिशेरते ? तथा युष्मत्परित्यागे केवलं तस्य मोह एव कारणम् । प्राप्तेऽर्थसंशये कर्णादिषु विश्वसन्नयं नृपोऽवश्यमेव लक्ष्म्या प्रच्युतो भविष्यति । अधर्मबहुलायां शत्रुसभायामसह्यमपि शत्रुनिकारं सोढवता त्वया साधु कृतम् । यद्यपि शत्रुभिस्तवापकारः कृतस्तथाऽपि तव गाम्भीर्यं सहनशीलताञ्च प्रकाश्य तैरुपकार एव कृतः कोऽन्यथा तवेदृशं माहात्म्यं जानीयात् । त्वं सत्यमवेहि ? विक्रमेणैव राज्यं पुनर्लप्स्यसे । शत्रवश्च ते वीर्यास्त्रादिभिरतिप्रबलाः, अतस्त्वमपिप्रकर्षलाभायो ेगं कुरु । पश्य-महावीरस्यापि जामदग्न्यस्यच

गुरोर्विजेता गाङ्गेयस्तत्पक्षे वर्तते, यं हि गाङ्गेयं मृत्युरपि बिभ्यदिव नोपसर्पति । युद्धे बाणधारा वर्षन्तं गुरुं द्रोणाचार्यं युष्मासु कः सोढुं शक्नुयात् ? यदा च क्रुद्धो राधेयः संग्रामे युध्येत् तदा मृत्युरपि ततो बिभीयात्का कथाऽन्येषाम् ? एतत्सर्वमालोच्याहं देवताऽऽराधनीं विद्यामर्जुनाय प्रदातुमायातोऽस्मि, यां प्राप्य स सर्वानेतान्समूलमुन्मूलयिष्यति । इत्युक्त्वा युधिष्ठिराज्ञया समुपागतायार्जुनाय तां विद्यां योगञ्च मुनिरयच्छत् ।

## अर्जुनं प्रति द्रौपदीवाक्यम् ।

हे प्रिय ! शत्रुकपटेन नष्टप्रायमात्मगौरवं पुनरुद्धर्तुं प्रयतमानस्त्वं तपःसिद्धिपर्यन्तमस्माकं विरहेण मा दूयस्व । यशः प्राप्तुं सुखमधिगन्तुं वाऽभिनिवेशेनोद्योगं कुर्वतां जनानां कार्यसिद्धिरवश्यम्भाविनी । पश्य शत्रुभिरस्माकं कियानपकारः कृतः—तैर्हि वयं भृशं विमानिताः, तेजस्विनाञ्च मानहानिः प्राणहानितुल्या, दिक्षु विस्तृतमस्मद्यशः संकोचयन्निव स निकारस्तत्रस्थैर्नृपैर्निन्द्यतया कथञ्चिद्विश्वस्तः, स हि पुराकृतकर्माण्यपि प्रमृजन् ख्यातिञ्च विनाशयन् स्मर्तुमपि दुःसहः का कथा तदनुभवस्य ? साम्प्रतमहं त्वामन्यादृशमिव प्रेक्षे, इदानीं हि तव तेजः शत्रुभिः पराभूतम् । साम्प्रतं क्रियाशून्यत्वात्तवास्त्राण्यपि लज्जितानीव दृश्यन्ते, तव यशोऽपि नष्टम् । दुःशासनकृतस्पर्शेण मलिनैरेभिर्मम केशैस्तव शौर्यबलेऽपि निन्दितप्रायेऽतः संशये त्वं पूर्वोक्त एव धनञ्जयोऽसि ? वस्तुतः स एव क्षत्रियो यः सतो रक्षेत्, तदेव च धनुः प्रशस्तं यद्रणे शत्रून् व्यापादयेत् । अन्यथा तु तद्द्वयमपि व्यर्थमेव । हे पार्थ ? साम्प्रतं तव शौर्यादिगुणा नः समानदुःखा इव वर्तन्ते । त्वमेव चास्मद्दुःखं दूरीकर्तुं समर्थः यो हि जनः सर्वातिशायिनीं योग्यतां स्वकार्यैः प्रकटयति स एव लोकेऽसाधारणो भवति । प्रिय ! कदाचिदपि त्वयाऽस्मद्विना मनो न खेदयितव्यम् , मनःखेदे हि कार्यसिद्धिरसम्भवा भविष्यति । यद्यपि यत्र त्वं स्थास्यसि तत्र किमपि भयं नास्ति तथाऽपि त्वया सावधानेनैव भाव्यम् , दुर्जना हीर्ष्यया साधूनपि विप्रकुर्वते । अतो महर्षेर्वचनमनुपालयन् नो मनोरथान् सफलय । कृतकृत्यं प्रतिनिवृत्तं त्वां सम्यक् परिरप्स्ये ।

## १९३७
## व्याकरणादि-मध्यमपरीक्षायाम् ।
### २ वर्षे ३ पत्रम्
### ( अनुवादे पञ्चतन्त्रे च प्रश्नाः )

१ निम्नाङ्कितस्य हिन्दीसन्दर्भस्य संस्कृतभाषायामनुवादो विधेयः—

जो धर्मात्मा हैं वे शरणागत का त्याग नहीं करते। विपत्ति में भी धर्म में दृढ रहते हैं। इसी कारण उनका यश वृद्धि पाता है। बड़ों का निरादर करने से मनुष्य नीच दशा को प्राप्त होता है और कष्ट भोगता है। विद्वान् चाहे बालक हो, अथवा कुरूप, सदैव आदर के योग्य है। परन्तु विद्वान् को अपनी विद्या का अहङ्कार कभी न करना चाहिये। पढ़ी हुई विद्या सफल हो अथवा निष्फल, अधर्माचरण तो कभी भी उचित नहीं है।

२ अधस्तनयोर्गद्यभागयोः शुद्धहिन्दीभाषाया अनुवादः कार्यः—

(क) कस्मिंश्चिद् वृक्षे पुरा अहमवसम्। तत्राधस्तात् कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म। अथ सदैव अस्तमनवेलायामागतयोरावयोरनेकसुभाषितगोष्ठ्या परमसुखेन कालो व्रजति। अथ कदाचित् कपिञ्जलः प्राणयात्रार्थमन्यैश्चटकैः सहान्यं पक्वशालिप्रायं देशं गतः। ततो यावन्निशासमयेऽपि नायातस्तावदहं सोद्वेगमनास्तद्वियोगदुःखितश्चिन्तितवान्।

(ख) अथैवं जल्पतां तेषां चित्राङ्गदो नाम हरिणो लुब्धकत्रासितस्तस्मिन्नेव सरसि प्रविष्टः। अथायान्तं ससम्भ्रममवलोक्य लघुपतनकः वृक्षमारूढः। हिरण्यको निकटवर्तिनं शरस्तम्बं प्रविष्टः। मन्थरकः सलिलाशयमास्थितः। अथ लघुपतनको मृगं सम्यक् परिज्ञाय मन्थरकमुवाच, एह्येहि सखे मन्थरक। मृगोऽयं तृषार्तोऽत्र समायातः सरसि प्रविष्टः तस्य शब्दोऽयं न मानुषसम्भव इति। तच्छ्रुत्वा मन्थरको देशकालोचितमाह—भो लघुपतनक ! यथाऽयं मृगो दृश्यते प्रभूतमुच्छ्वासमुद्वहन्नुद्भ्रान्तदृष्ट्या पृष्ठतोऽवलोकयति। तन्न तृषार्त एषः। नूनं लुब्धकत्रासितः। १०

३ "पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः" इत्यमुं पद्यांशमुद्दिश्यैका कथा स्वसंस्कृतेन संक्षेपतो लेख्या।

## १९३७

# व्याकरणादि-मध्यमपरीक्षायाम् ।

## २ वर्षे २ पत्रम्

### ( शिशुपालवधस्य प्रथमद्वितीयसर्गयोः प्रश्नाः )

( सूचना—प्रतिप्रश्नमुत्तरं पृथक् प्रदातव्यम् । अन्यप्रश्नेन सह मेलयित्वोत्तरप्रदानेऽङ्कहानिर्भविष्यति ) ।

१-क—विलोकनेनैव तवामुना मुने कृतः कृतार्थोऽस्मि निबर्हितांहसा ।
तथाऽपि शुश्रुषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते ॥ १०

ख-परेतभर्तुर्महिषोऽमुना धनुर्विधातुमुत्खातविषाणमण्डलः ।
हृतेऽपि भारे महतस्त्रपाभरादुवाह दुःखेन भृशानतं शिरः ॥ १०

ग-तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिम् ।
शुभेतराचारविपक्त्रिमापदो विपादनीया हि सतामसाधवः ॥ १०

घ-आत्मोदयः परज्यानिर्द्वयं नीतिरितीयता ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतीयते ॥ १०

ङ-मा वेदि यदसावेको जेतव्यश्चेदिराडिति ।
राजयक्ष्मेव रोगाणां समूहः स महीभृताम् ॥

(२) एतेषु केऽपि चत्वारः पर्यायकोशविग्रहवाक्यप्रदर्शनपूर्वकं व्याख्येयाः । तृतीयश्लोकस्य व्याख्यानमवश्यं कार्यम् ।

(३) प्रथमप्रश्नेऽधोरेखाङ्कितेषु पदेषु समासास्तन्नामभिः प्रदर्शनीयाः । ११

(४) प्रथमप्रश्ने पञ्चमश्लोकस्य भावार्थः सुस्पष्टं स्वसंस्कृतगिरा वक्तृबोद्धव्यनिर्देशपूर्वकं लेखनीयः । ४

(५) प्रथमप्रश्ने प्रथमश्लोकस्यच्छन्दसो नामनिर्देशपूर्वकं लक्षणं लेखनीयम् । २



श्रीगुरुःशरणम् ।

# सिद्धान्तकौमुदी ।

## ( स्त्रीप्रत्ययान्तोभागः )

## व्याकरणाचार्य नेने पं० गोपालशास्त्रि विरचित

## सरला टिप्पण्या सहिता ।

## 'रूपलेखनप्रकार-पङ्क्तिलेखनप्रकारा'ख्य परिशिष्ट सहिता च ।

इस पुस्तक का स्त्रीप्रत्ययान्त भाग काशीस्थ गवर्नमेंट संस्कृत पाठशालीय व्याकरण मध्यमा प्रथमखण्ड की परीक्षा में निर्धारित मुद्रित हो कर तैयार होगया है, इसमें गवर्नमेंट संस्कृत कालेज बनारस के अध्यापक पण्डित गोपालशास्त्रीनेनेजी की बनायी हुई सरला नामक टिप्पणी दी गई है तथा रूपलेखनप्रकार व पंक्तिलेखनप्रकार ऐसे दो परिशिष्ट अंतमें जोड़ दिये गए है परिक्षार्थी छात्रगण को इस से अभूतपूर्व लाभ हुआ है इसका अभ्यास करने से रूप लिखने व पंक्तियों का व्याख्यान करने में विद्यार्थिगण अत्यन्त पटु होंगे, सिद्धान्तकौमुदीकी अनेक टीका टिप्पणी इधर प्रकाशित हुई हैं उन सबका सारांश इसमें होते हुए प्राचीन ग्रन्थकारों के मतोंका भी प्रायः उल्लेख इस टिप्पणी में होने से इस सरला टिप्पणीकी सहायतासे सिद्धान्तकौमुदीका अभ्यास करने वाले छात्रोंका अनेक वयाकरणके मत मतान्तरका सम्यक् ज्ञान हो सकेगा यह इस ग्रन्थकी विशेपता है अन्तमें सूत्रानुक्रमणिका वार्तिक सूची भी दी गई है जिससे विपय अन्वेषण की भी सुलभता इसमें है । कागज उत्तम, टाईप नया, छपाई सुन्दर है, इतनी विशेपता व सुलभता रहने पर भी दाम लागत मात्र १।) कमीशनकाट कर १) रखागया है ।

---

**सिद्धान्तकौमुदी ( गुटका-संस्करण )** समाप्य पाणिनीय-शिक्षा-अष्टाध्यायी-गण-वार्त्तिक-धातु-परिभाषा-उणादि-फि सूत्र-लिङ्गानुशासनसूत्रपाठसहित । तथा अष्टाध्यायी आदि ८ आठों सूत्रपाठ की अनुक्रमसूचीसहित । मूल्य २) कमीशनकाटकर २।)

# वाक्यपदीय

## न्याय–व्याकरणाचार्य
## पं० श्रीसूर्यनारायणशुक्लजी कृत
## भावप्रदीपव्याख्या, टिप्पणी सहित ।

व्याकरणाचार्य परीक्षा में प्रविष्ट वाक्यपदीय का ब्रह्मकाण्ड कितना कठिन है यह बात प्रत्येक शास्त्रानुरागि को विदित ही है । इस ग्रन्थ का महत्त्व कैयट तथा नागेशभट्ट प्रभृति महाभाष्य के समान आदर करते हैं । अन्य दर्शनों के पण्डित भी इसका बहुत ही आदर करते हैं । वैयाकरणों का स्फोटवाद इसी ग्रन्थ के ऊपर अवलम्ब रखता है । इस ग्रन्थ की प्राचीन हेलाराजकी एक टीका मिलती है जोकि अत्यन्त कठिन होनेके कारण छात्रों को समझ में नहीं आती । इस लिए मैंने काशी गवर्नमेन्ट संस्कृत कालेज के अध्यापक न्याय—व्याकरणाचार्य पण्डित श्रीसूर्यनारायणशुक्लजी से प्रार्थना कर इसकी परीक्षोपयोगि सरल तथा विस्तृत भावप्रदीप टीका तथा टिप्पणी बनवाकर आप लोगों के सेवामें समर्पित करते हैं इस टीका में टीकाकार ने न्यायतात्पर्यटीका प्रशस्तपादभाष्य श्लोकवार्तिक शाङ्करभाष्य प्रभृति ग्रन्थों की तथा कैयट विवरण की सहायता लेकर वैयाकरण सिद्धान्त को ठीक समझाने की चेष्टा की है। टीका के विस्तृत होने पर भी श्लोकार्थ को स्फुट करने के लिए टीकाकार ने पहिले टीका में श्लोक का अर्थ लिख कर विशेष वक्तव्य अयंभावः इत्यादि लेखों से लिखा है । नागेश तथा हरिका जहां स्फोट के जन्यत्वाजन्यत्व वाक् के चातुर्विध्यत्रैविध्य में मतभेद है उसे स्फूट दिखाया गया है । मुझे दृढ विश्वास है कि आप पुस्तक को देखते ही प्रसन्न होगें ।

मूल्य बहुत सस्ता केवल १) विद्यार्थियों को कमीशनकाट कर ।।।-) में मिलेगा ॥

---

१ फक्किकारत्नमञ्जूषा । सिद्धान्तकौमुदीस्थपङ्क्तिव्याख्यानरूपा ।
प्रथमभाग २) द्वितीयभाग २) सम्पूर्णका रु० ४)

२ मनोरमाशब्दरत्नप्रश्नोत्तरावली । (अव्ययीभावान्ता) स्वरवैदिक-प्रकरणसिद्धान्तकौमुदी, वैयाकरणभूषणसार, परिभाषेन्दुशेखर, महाभाष्याणाञ्च राजकीय परीक्षासु समागतैः २० वर्ष प्रश्नैश्च संयोजिता । रु० ॥=)

---

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय बनारस सिटी ।

## पं० श्री केशवमिश्रशास्त्रीजी संपादित—
## वैयाकरणसिद्धान्तकौमुद्याः—

१. स्त्रीप्रत्ययादारभ्य चातुरर्थिकान्तप्रक्रियाप्रयोगसूची। प्रश्नपत्र सहित। मूल्य ।)

२. ण्यन्तादिकृदन्तान्तप्रक्रियाप्रयोगसूची। प्रश्नपत्र सहित। मूल्य ।)

३. शैषिकादिद्विरुक्तान्त तद्धितप्रक्रियाप्रयोगस्मृतिसूची।) प्रश्नपत्र सहित। मूल्य ≡)

४. वैदिकस्वरप्रक्रियाप्रयोगसूची। सटीक। प्रश्नपत्र सहित। द्वितीय संस्करण। मूल्य ।)

५. भ्वाद्यादिदशगणप्रक्रियाप्रयोगसूची। ( यन्त्रस्थ )

## पाणिनीयव्याकरणे वादरत्नम्—

[ न्यायव्याकरणाचार्य मीमांसकशिरोमणिना श्रीसूर्यनारायणशुक्लेनविरचितम् ]।

इस ग्रन्थ के प्रथमभाग मे न्यास प्रकरण तथा द्वितीय भाग में परिष्कार प्रकरण है। न्यास–परिष्कार का इतना उत्तम ग्रन्थ आज पर्यन्त छपा ही नहीं। इन दोनों भागों को संग्रह करलेने से फिर न्यासरत्नावली, न्यासकौमुदी, पाणिनी-तन्त्रक्रोडपत्र, शिशुतोषणी, भावकुतूहल, शास्त्रार्थरत्नावली इत्यादि किसी ग्रन्थ के संग्रह करने की आवश्यकता न होगी।

मूल्य प्रथम भाग १॥) द्वितीयभाग १।) ( तृतीय पारिशिष्टभाग छपता है )।

द्वितीय संस्करण ] **फक्किकासरलार्थः—** [ द्वितीय संस्करण

व्याकरणाचार्य पण्डित रामचरित्रत्रिवेदिः विरचितः।

संस्कृत प्रेमी विद्यार्थियों को मालुम हो कि आप लोगोंने फक्किका की अनेक प्रकाशित पुस्तकें देखी सुनी होगी। परन्तु हमने आप लोगों के हित के लिए अत्यन्त उपयोगी परीक्षोपयोगी फक्किकासरलार्थः नाम की पुस्तक बनवाई है। यह पुस्तक ऐसी उत्तम परीक्षा की रीति से लिखी गई है कि जीससे विद्यार्थियों की समस्त कठिनाई दूर होगई हैं प्रत्येक मध्यम परीक्षार्थी को इस पुस्तक की एक एक प्रति खरीद कर लाभ उठाना चाहिए। द्वितीय संस्करण का मूल्य भी लागत मात्र चारो खण्ड की संपूर्ण पुस्तक का।=) कमीशन काटकर।–) आना मात्र है।

श्रीगुरुःशरणम् ।

# सिद्धान्तकौमुदी ।

## ( स्त्रीप्रत्ययान्तो भागः )

व्याकरणाचार्य नेने पं० गोपालशास्त्रि विरचित

## सरला टिप्पण्या सहिता ।

'रूपलेखनप्रकार-पङ्क्तिलेखनप्रकारा'ख्य परिशिष्ट सहिता च ।

इस पुस्तक का स्त्रीप्रत्ययान्त भाग काशीस्थ गवर्नमेंट संस्कृत पाठशालीय व्याकरण मध्यमा प्रथमखण्ड की परीक्षा में निर्धारित मुद्रित होकर तैयार होगया है, इसमें गवर्नमेंट संस्कृत कालेज बनारस के अध्यापक पण्डित गोपालशास्त्रीनेनेजी की बनायी हुई सरला नामक टिप्पणी दी गई है तथा रूपलेखनप्रकार व पंक्तिलेखनप्रकार ऐसे दो परिशिष्ट अंतमें जोड़ दिये गए हैं परिक्षार्थी छात्रगण को इस से अभूतपूर्व लाभ हुआ है इसका अभ्यास करने से रूप लिखने व पंक्तियों का व्याख्यान करने में विद्यार्थिगण अत्यन्त पटु होंगे, सिद्धान्तकौमुदीको अनेक टीका टिप्पणी इधर प्रकाशित हुई हैं उन सबका सारांश इसमें होते हुए प्राचीन ग्रन्थकारों के मतोंका भी प्रायः उल्लेख इस टिप्पणी में होने से इस सरला टिप्पणीकी सहायतासे सिद्धान्तकौमुदीका अभ्यास करने वाले छात्रोंका अनेक वैयाकरणके मत मतान्तरका सम्यक् ज्ञान हो सकेगा यह इस ग्रन्थकी विशेषता है अन्तमें सूत्रानुक्रमणिका वार्तिक सूची भी दी गई है जिससे विषय अन्वेषण की भी सुलभता इसमें है। कागज उत्तम, टाईप नया, छपाई सुन्दर है, इतनी विशेषता व सुलभता रहने पर भी दाम लागत मात्र १।) कमीशनकाट कर १) रखागया है ।

---

**सिद्धान्तकौमुदी ( गुटका–संस्करण )** सभाष्य पाणिनीय-शिक्षा-अष्टाध्यायी-गण-वार्त्तिक-धातु-परिभाषा-उणादि-फिट्सूत्र-लिङ्गानुशासनसूत्रपाठसहित। तथा अष्टाध्यायी आदि ८ आठों सूत्रपाठ की अनुक्रमसूचीसहित। मूल्य २) लागत मात्र।

V. V. PRESS, BENARES.